

# प्रस्तावना ।

## हस्तिमल्लकवेः परिचयः ।

सोऽयं समस्तजगदूर्जितचारुकीर्तिः
स्याद्वादशासनरमाश्रितशुद्धकीर्तिः ।
जीयादशेषकविराजकचक्रवर्ती
श्रीहस्तिमल्ल इति विश्रुतपुण्यमूर्तिः ॥ ( अय्यपार्य )

एतद्ग्रंथकर्तुर्हस्तिमल्लेति नाम प्रथितमासीत् । अयं च गोविंदभट्टाख्यविदुषः सुनुर्दाक्षिणात्य आसीत् । गोविंदभट्टो वत्सगोत्रीयो ब्राह्मणः पूर्वमजैन आसीत्, पश्चाद्भगवत्समंतभद्रविरचितदेवागमसूत्राध्ययनेन जैनो जातः । अयंस्यास्य द्वितीयपुत्रो हस्तिमल्लेन सूत्रधारमुखेनाख्यापितः " सरस्वतीविस्मयनीयोपायनस्य भट्टारगोविंदस्वामिसूनुना अजनापरनैनयप्रमुखाणामपि रूपकाणां प्रवर्तकेन विरचितं हस्तिमल्लेन । अस्मिन् तेन कविना स्वपितृनाम्ना साकं यत् 'भट्टार' 'स्वामी' इत्येनत्पदद्वयं योजितं ताभ्यां प्रतीयते कदाचित् गोविंदभट्टः तदानीं साधुर्भट्टारको वा प्रथितः स्यात् । अन्यच्च विक्रांतकौरवीयप्रशस्तौ वीरसेन जिनसेन गुणभद्राद्याचार्यपरंपराया उल्लेखं कृत्वा लिखितं ।

,तच्छिष्यानुक्रमे यातेऽसंख्येये विश्रुतो भुवि ।
गोविंदभट्ट इत्यासीद्विद्वान् मिथ्यात्ववर्जितः ॥

तस्यां यत् गोविंदभट्टो गुणभद्रादिशिष्यपरंपराया निरूपितः अनेनापीति प्रतीयते यद् गोविंदभट्टो गृही नासीत् साधुर्भट्टारको वा स्यात् ।

अस्ति गोविंदभट्टो दक्षिणदेशनिवासी । तत्र स्वर्णयक्षी नाम्नी काचिद्देवी समाराधिता जाता । तत्प्रसादेन तस्य एतत्षट्पुत्रप्राप्तिः सञ्जाता–१ श्रीकुमार, २ सत्यवाक्य, ३ देवरवल्लभ, ४ उदयभूषण, ५ हस्तिमल्ल, ६ वर्द्धमानश्च । एते षडपि

कवयो विद्वांसश्च बभूवुः । हस्तिमल्लेन एतन्मैथिलीकल्याणनाटकस्य प्रस्तावनायां निजाग्रजः सत्यवाक्यः 'श्रीमतीकल्याण' प्रभृतिग्रंथानां कर्ता प्ररूपितः परं सत्यवाक्यस्येदानीतनपर्यंतं कोपि ग्रंथो नोपलब्धः । एतेषु कुमारकविनिर्मित आत्मप्रबोधाख्यो लघुग्रंथो ईडराख्यपुरस्य सरस्वतीभवने अस्ति । स हस्तिमल्लभ्रातृश्रीकुमारस्यैव वान्यस्य कस्यापीति न प्रतीयते ।

'राजावली' कथातः ज्ञायते यत् हस्तिमल्लस्य पार्श्वपंडितादयः पुत्रा आसन् लोकपालार्याख्य एकः शिष्यश्च । अवश्यमेव तेपि विद्वांसः कवयश्च भविष्यंति किंतु तेषां विषये नाद्यापि पर्यन्तं किंचिद् ज्ञातम् ।

हस्तिमल्लकवेरनुजस्य वर्धमानकवेर्विषये जनानामयं विश्वासोस्ति यत्स गणरत्नमहोदधिनामकव्याकरणविषयग्रंथस्य कर्त्ता, परमयं भ्रमः । ततो गणरत्नकर्त्ता विक्रमसंव

स

गृह

गणरत्नमहोदधिकर्त्ता श्वेतांबर आसीत् । अस्मिन् विषयेऽनेकानि प्रमाणानि संति । पूर्वं तु तेन स्वकीयग्रंथे यत् शतश उदाहरणानि दत्तानि तानि सर्वाणि अजैनानां श्वेतांबरग्रंथकर्तृणामेव, दिगंबराणामेकमपि न दत्तं । द्वितीयं पूर्वोक्तोदाहरणेषु द्वौ श्लोकावेतादृशौ ययोः श्वेतांबराणां प्रशंसा दिगंबराणां च निंदा कृतासीत् ।

यथा वीराचार्यणाम्—

युक्तं सितांबराणां तुम्बग्रहणं कुटुंबपरिहरणं ।
कथमन्यथा तरीतुं शक्यः संसारतोयनिधिः ॥

( गणरत्नमहोदधिः, पृष्ठ २२ )

यथा श्रीसागरचंद्रस्य—

अकल्पितप्राणसमासमागमा मलीमसांगा धृतभैक्षवृत्तयः ।
निर्ग्रंथतां त्वत्परिपंथिनो गता जगत्पते किं स्वजिनायलंबिनः ॥

( गणर. पृष्ठ १६४ )

गणरत्नमहोदधिकर्तृनिर्मितं किमपि सिद्धराजवर्णनाख्यं काव्यं वर्तते तस्मिन् चौलुक्यनरेशसिद्धराजस्य वर्णनमस्ति । एतत्काव्यस्यानेके श्लोका गणरत्नमहोदधावुदाहरणस्वरूपेणोद्धृता । अणहिल्लपुर ( पाटण ) नरेशस्य सिद्धराजस्य श्वेतांबरजैनसंप्रदाये महती कृपासीत् । अनेन प्रतीयते यत् गणरत्नमहोदधेः कर्ता गुर्जरदेशनिकटस्थः श्वेतांबरश्च स्यात् । सिद्धराजाणहिल्लपुरप्रशंसायां कश्चिदपि दिगंबराम्नायी ग्रंथो लिखिष्यतीति न किंचित्संभावना प्रतीयते ।

सारांश इत्येव यत् हस्तिमल्लस्य भ्रातुर्वर्धमानकवे गणरत्नमहोदधिकर्तुश्च नामसाम्यं विहाय नान्य कोपि संबंध. । अस्मिंश्च विषयेऽनेकानि प्रमाणानि निरूपयितुं शक्यानि।

हस्तिमल्लो महान् प्रख्यातश्च कवि प्रतीयते । तस्य विरुदावल्या प्रशंसासूचकपदेभ्य एतत् सूचित भवति। विक्रान्तकौरवे स स्व सरस्वतीस्वयंवरवल्लभ, महाकवितल्लजेति निरूपितवान् । प्रथस्याख्याति स स्वीय नाम ' सूक्तिरत्नाकरेति प्रथयामास । तस्याग्रजेन सत्यवाक्येन स ' कविताम्राज्यलक्ष्मीपति ' इति कथयित्वा संबोधित ।

अनेन प्रतीयते हस्तिमल्ल इति कवेरिद वास्तविकनामधेय नास्ति किंतु तद्गुणविशेषेणैव निक्षिप्त । *अस्मिन् विषये अय्यपार्यनाम्ना विदुषा विरचिते जिनेंद्रकल्याणाभ्युदयनाम्नि* ग्रंथे श्लोको दत्त —

सम्यक्त्वं सुपरीक्षितुं मदगजे मुक्ते सरण्यापुरे
चास्मिन् पाण्ड्यमहीश्वरेण कपटाद्धंतुं स्वमभ्यागते ।
शैलूषं जिनमुद्रधारिणमपास्यासौ मदध्वंसिना
श्लोकेनापि मदेभमल्ल इति य प्रख्यातवान् सूरिभि ॥ १६ ॥

अनेन प्रतीयते यत् हस्तिमल्लेन हंतुमागतस्य मदमत्तहस्तिनो मदो दूरीकृत कश्चिज्जिनमुद्राधारी धूर्तश्चैवेन श्लोकेन निर्मदीकृत । अतस्तस्य नाम मदेभमल्लो हस्तिमल्लो वा प्रथित ।

विक्रान्तकौरवनाटकस्य प्रथमांकेपि श्लोको वर्तते तस्मिन् कवेर्हस्तियुद्धे विजयप्राप्तेस्तन्निमित्तकपाण्ड्यनरेश्वरद्वारा सत्कारप्राप्तेश्चोल्लेखोऽस्ति—

श्रीवत्सगोत्रजनभूषणगोपभट्ट-
प्रेमैकधामतनुजो भुवि हस्तियुद्धात् ।
नानाकलांबुनिधिपाण्ड्यमहेश्वरेण
श्लोकै शतैस्सदसि सत्कृतवान् बभूव ॥ ४० ॥

उपर्युक्तश्लोकद्वयेनाजनापवनजयस्य निम्नलिखितप्रशस्तिश्लोकेन प्रतीयते यत् हस्तिमल्ल पाण्ड्यदेशीयराज्ञ कृपापात्रोऽभूत् तद्राजधान्यां च स्वबन्धुभि सह निवासं चकार—

श्रीमत्पाण्ड्यमहीश्वरे निजभुजादंडावलंबीकृते
कर्णाटावनिमंडलं पदनतानेकावनीशेऽवति ।
तत्प्रीत्यानुसरन्स्वबन्धुनिवहैर्विद्वद्भिराप्तैस्समं
जैनागारसमेतसंतरनमे (?) श्रीहस्तिमल्लोऽवसत् ॥

---

१ अय्यपार्येण १३७६ विक्रमसंवत्सरे जिनेंद्रकल्याणाभ्युदयस्य रचना कृता ।

द्रविडदेशसन्निहितस्य मदुरा ( दक्षिणमथुरा ) याः समीपस्थप्रदेशाना पाण्ड्यदेश इति नाम आसीत् । कविस्थितिसमये तत्रत्यः पाण्ड्यमहेश्वरो नृपो बभूव । अयं सुंदरपाण्ड्य ( प्रथम ) स्योत्तराधिकारी स्यात् । तस्य राज्यकाल. १३०७ वि० संवत्सरात्प्रारंभो भवति । एनं कवी राजाधिराज नानाकलाविनिधीति लिखितवान् अयं कवेर्महदादरश्चकार ।

कर्णाटककविचरितस्य कर्त्रा हस्तिमल्लकविसमयः ई० सन् १२९० अर्थात् १३४७ विक्रमाब्दो निश्चितः । अयमेव च सम्यक् प्रतीयते, यत अय्यपार्येण स्वीयजिनेन्द्रकल्याणाभ्युदयग्रंथः १३७६ विक्रमाब्दे समाप्तिं नीतः, तस्मिंश्च हस्तिमल्लस्योल्लेखः कृतः । स नोल्लेख एतादृशो येन हस्तिमल्लस्तत्समकालीन. तस्य कविना सर्गे साक्षात्परिचयो वा प्रतीयेत ।

हस्तिमल्लो गृहस्थ आसीत् न गृहत्यागी, एतत्कथनस्योल्लेखो नेमिचंद्रकृतप्रतिष्ठातिलकस्यास्मिन् श्लोके कृत.—

**परवादिहस्तिनां सिंहो हस्तिमल्लस्तदुद्भवः ।**
**गृहाश्रमी बभूवार्हच्छासनाविप्रभावकः ॥ १३ ॥**

हस्तिमल्लो महान् प्रसिद्धकवि· प्रतीयते। तस्य प्रतिभा परं तनाटकेभ्य अनुमीयते। अधुनापर्यंत तस्य केवलं नाटकग्रंथा एवं उपलब्धाः, तेष्वेको विक्रान्तकौरवःप्रकाशित.। द्वितीयोऽयं मैथिलीकल्याणरूपकग्रंथः प्रकाश्यते । तृतीय· सुभद्राहरणः चतुर्थोऽजनापवनंजयश्चापि उपलब्धा आरान्, ययो प्रकाशने प्रयत्नो विधास्यते । हस्तिमल्लस्यैक आदिपुराणः पुरुचरितं वा नाम ग्रंथः **श्रीदौर्बलिशास्त्रिणां** सरस्वतीभवने वर्तते यस्मिन्नेकसहस्रानुमिता· श्लोकाः संति, परं स अस्मद्दृष्टिपथे नायात ।

देवचंद्रकविः स्वीय ' राजावलीकथायां ' हस्तिमल्लमुभयभाषाकविचक्रवर्तीति लिखितवान् । अनेन प्रतीयते यत्स संस्कृतं विहाय कनड़ीभाषायाश्च कविरासीत् एतद्भाषाया चापि तेन रचना विहिता स्यात् । अस्य ग्रंथस्य संशोधनेऽस्माकं मित्रवर्येण श्रीयुत **कुमारय्या** इतिनाम्ना विदुषा सहायता कृतास्तस्मैऽन्तःकरणेन शतशो धन्यवादं ददामीति । कृतं पल्लवितेनेति शम् । *

हीराबाग़ बम्बई नं. ४.
श्रावण कृष्ण त्रयोदशी
संवत् १९७३ वि०

निवेदकः—
**मनोहरलाल-शास्त्री,**

---

* श्रीयुत नाथूरामप्रेमी–जैनहितैषिसम्पादकेन हिन्दीभाषाया लिखितस्य लेखस्यानुवादोऽयम् ।

# माणिकचन्द दिगम्बर-जैनग्रन्थमालाकी नियमावली ।

१-इस ग्रन्थमालामें केवल दिगम्बर जैन सम्प्रदायके संस्कृत और प्राकृतिक भाषाके प्राचीन ग्रन्थ प्रकाशित होंगे । यदि कमेटी उचित समझेगी तो कभी कोई देशभाषाका महत्त्वपूर्ण ग्रन्थ भी प्रकाशित कर सकेगी ।

२-इसमें जितने ग्रन्थ प्रकाशित होंगे उनका मूल्य लागत मात्र रक्खा जायगा । लागतमें ग्रन्थ सम्पादन कराई, संशोधन कराई, छपाई, बधाई आदिके सिवाय आफिस खर्च, व्याज और कमीशन भी शामिल समझा जायगा ।

३-यदि कोई धर्मात्मा किसी ग्रन्थकी तैयार करांईमें जो खर्च पड़ा है वह, अथवा उसका तीन चतुर्थांश, सहायतामें देंगे तो उनके नामका स्मरणपत्र और यदि वे चाहेंगे तो उनका फोटू भी उस ग्रन्थकी तमाम प्रतियोंमें लगा दिया जायगा । जो महात्मा इससे कम सहायता करेंगे उनका भी नाम आदि यथायोग्य छपवा दिया जायगा ।

४-यदि सहायता करनेवाले महाशय चाहेंगे तो उनकी इच्छानुसार कुछ प्रतियाँ जिनकी संख्या सहायताके मूल्यसे अधिक न होगी मुफ्तमें वितरण करनेके लिये दे दी जायगी ।

५-इस ग्रन्थमालाकी कमेटी द्वारा चुने हुए ग्रन्थ ही प्रकाशित होंगे ।

पत्रव्यवहार करनेका पता—

नाथूराम प्रेमी,

हीराबाग, पो० गिरगाव, बम्बई ।

## माणिकचन्द-दिगम्बरजैनग्रन्थमालासमिति ।

( प्रबन्धकारिणी सभाके सभ्य )



१ राय बहादुर सेठ स्वरूपचन्द हुकुमचन्द ।
२ ,, ,, ,, तिलोकचन्द कल्याणमल ।
३ ,, ,, ,, ओंकारजी कस्तूरचन्द ।
४ सेठ गुरुमुखरायजी सुखानन्द ।
५ ,, हीराचन्द नेमिचन्द आ० मजिस्ट्रेट ।
६ मि. लल्लूभाई प्रेमानन्द परीख एल्. सी. ई. ।
७ सेठ ठाकुरदास भगवानदास जौंहरी ।
८ ब्रह्मचारी शीतलप्रसादजी ।
९ पं० पन्नालालजी काशलीवाल ।
१० पं० खूबचन्दजी शास्त्री ।
११ नाथूराम प्रेमी ( मंत्री )

## श्रीमान् सेठ सिदराम पिराजी।

श्रीमान् सेठ सिदरामजी सतारा जिलेकी तासगाँव तहसीलके 'सावळज' नामक ग्रामके रहनेवाले हैं। आप दिगम्बराम्नायको माननेवाली कासार नामक जैनजातिके पुरुष रत्न हैं। आप बड़े ही सज्जन, धर्मात्मा और जैनधर्मके ज्ञाता है। संस्कृत, हिंदी, कानड़ी और मराठी, भाषाके आप अच्छे जानकार है। मराठी आपकी जन्मभाषा है। संस्कृत जैनग्रन्थोंका तो आप नित्यही स्वाध्याय किया करते है। दिगम्बर और श्वेताम्बर दोनों सम्प्रदायके ग्रन्थोंका आपने स्वाध्याय किया है। जैनधर्मके संस्कृत साहित्यको प्रकाशित करनेकी ओर आपकी बड़ी रुचि है। आप कहा करते हैं कि जैनोंका सबसे प्रथम कर्तव्य अपने प्राचीन साहित्यका प्रकाशित करना है। क्योंकि जैनसाहित्य ही जैनधर्मका जीवन है।

जैनसाहित्यका प्रचार करनेके लिए आपने इस ग्रन्थकी ५०० प्रतियाँ लेनेकी कृपाकरके इस संस्थाको उपकृत किया है। इस ग्रन्थमालाको सहायता देनेकी आप और भी सदिच्छा रखते हैं। अन्य धर्मात्माओंको आपका अनुकरण करना चाहिए।



श्रीमान् सेठ सिद्राम पिराजी ।

The Manoranjan Press, Bombay






नमः परमात्मने ।

अथ श्रीमद्हस्तिमल्लकविविरचितं

# मैथिलीकल्याणं

## नाटकम् ।



यः प्रस्तोता त्रिलोक्यां प्रतिहतविपदां समतानां कृतीनां
यं च स्तोता स्वयं च स्तुतिशतपदवी धाग्यधूवल्लमानाम् ।
कल्यः कल्याणभागिश्रियमनुपरमामातवानातरूपः
सोऽयं भद्रं विधेयाद्दशरथतनय साधु वो रामभद्र ॥ १ ॥

( नान्द्यन्ते )

सूत्रधारः—अलमतिविस्तरेण । ( नेपथ्याभिमुखमवलोक्य ) आर्ये इतस्तावत् ।

( प्रविश्य )

नटी—अज्ज इयम्हि ।

सूत्रधारः—गृह्यतां नेपथ्यरचना ।

नटी—किं णु खु दाणि अज्जो सविसेस समुसुओ सग्गीआरम्भे ।

---

१ आर्य इयमस्मि । २ किं नु खलु इदानीं आर्यः सविशेष समुत्सुक सगीतारम्भे ।

सूत्रधारः—आर्ये साधु लक्षितं अद्य खलु वसंतोत्सवे सबहुमानमाहूयाज्ञापितोऽस्मि विशेषवेदिन्या गृहीतनाट्यशास्त्रोपनिषदा परिषदा, यथा मैथिलीकल्याणदर्शनोत्सुकः सकलोपि सामाजिकजनः, भवानेव तत्र निष्णातः तदिदानीं तदेव तावत् यथावत्प्रयोक्तव्यमिति ।

नटी—कुदो[1] खु पेक्खआणं एअंतदो तहिं आरंघा ।

सूत्रधारः—आर्ये किं न जानीषे तत् खलु निखिलशास्त्रतीर्थावगाहपवित्रीकृतधिषणस्य मध्यमलोकधिषणस्य निःशेषनिःपीतधर्मामृतरसायनस्य सरस्वतीविस्मयनीयोपायनस्य भट्टारकगोविंदस्वामिनः सूनुना श्रीकुमारसत्यवाक्यदेवरवल्लभोदयभूषणानां सुभाषितरत्नभूषणानामनुजेन कवेर्वर्धमानस्याग्रजेनांजनापवनंजयप्रमुखाणामपि रूपकाणां प्रवर्तकेन विरचितं हस्तिमल्लेन ।

नटी—तेणं हि जुंजइ तदो एव खु अस्सवि तहिं बहुमाणो[2] ।

सूत्रधारः—को वा न बहु मन्यते । एवं च खल्वसौ श्रीमतीकल्याणप्रभृतीनां कृतीनां कर्त्रा सत्यवाक्येन सूक्तिरसावर्जितचेतसा ज्यायसा कनीयानप्युपश्लोकितः ।

> किं वीणागुणरंकृतैः किमथवा सांद्रैर्मधुस्यान्दिभि—
> र्विभ्राम्यत्सहकारकोरकशिखाकर्णावतंसैरपि ।
> पर्याप्ताः श्रवणोत्सवाय कविता साम्राज्यलक्ष्मीपते
> सत्यं नस्तव हस्तिमल्लसुभगास्तास्ताः सदा सूक्तयः॥ २ ॥

नटी—वेसीकरेइ खु कविअणं सुभासिदं[3] ।

सूत्रधारः—साधूक्तं तथापि सज्जेषु तेषु तेष्वपि कालं परितः परिधेयेषु कविः सूक्तिभिरेवात्मानं काव्यव्यसने विनोदयति ।

---

१. कुतः खलु प्रेक्षकाणां एकांततः तस्मिन्नादरः । २ तेन हि युज्यते तत एव खलु अस्यापि तस्मिन् बहुमानः । ३ वशीकरोति खलु कविजनं सुभाषितं ।

नटी—कविअण्णओ ण खु कव्वपरिस्समाभिण्णो ।

सूत्रधार —अगोचरः खल्वय पृथग्जनस्य । कुत ।

नासाग्राहितलोचनो नियमिताशेषेन्द्रियोपप्लवो
नि संबाधविविक्तवासनिरतो ध्यानैकतानः कवि. ।
यत्स्वात्मन्यपरोपदेशविषयं वस्त्वंतरं केवल
स्वेनांतःकरणेन पश्यति सुरी तत्केन वा ज्ञायते ॥ ३ ॥

किंच—

अनादृत्य श्रुत्वा चलयति शिर कश्चन शनै-
र्विजिह्माक्षः पश्यन् विहसति च पार्श्वस्थमपर. ।
प्रसादं सूक्तीनामकृतसुकृत कृत्रिमबुध
किमीष्टे निर्वेष्टु दुरधिगमभावा हि कवयः ॥ ४ ॥

नटी—अज्ज सुट्ठु भणिअं ।

सूत्रधारः—आर्ये तदिदानीं रंगप्रसाधनहेतोरिममेव मकरकेतनकीर्तिप्रसरसुकुमारचंद्रिकाभिराम मलयपवनशिथिलितविरहिजनधैर्यग्रंथिं मदनमागधमधुपगानावमानितमानिनिमानग्रहमभ्यग्रविकसत्सहकारकोरकशिखापरिपूरितकुसुमशरशरविरथ सवर्धमानोत्कलिकासहस्रमज्जत्कामिलोक वर्तमानरमणीय वसतसमयमधिकृत्य गीयता तावत् ।

नटी—अज्ज तहा । ( गायति )

वासंतिएहिं बहु महु,-धाराणिस्संदविंदुसिसिरेहिं ।
मदाणिलेहिं रुणा होसदि दिसो ससिसणाहो ॥ ५ ॥

सूत्रधार —आर्य सुष्ठु गीत । विहरति चक्रवाकमिथुन सुखेन पुलिना कर्णेषु सरसां रमयति पद्मिनीषु रमणीं सलीलमिह राजहंसरसिक । मधुस-

१ कविजना या खलु काव्यपरिश्रमाभिज्ञा । २ आर्य सुष्ठु भणितम् । ३ आर्य तथा । ४ वासंतिकैर्बहु मधुधारानिष्यन्दबिंदुशिशिरैः । मदानिलैराच्छादिता भविष्यति दिव शशिसनाथा ।

मयावतारमणीयमेतदधुना मनांसि हरति प्रमदवनं विकासिसुकुमारचूतकलिकाकलापसुभगम् ।

**नटी**—अज्ज सुट्ठु भणिअं । अज्ज हि–

**सो अइरा आरामो कअसोहय्यंव महुररससुहाए ।**
**सीआए एआए ओतिण्णवसंतलच्छीए ॥ ६ ॥**

( नेपथ्ये )

साधु अवितथवादिनी भूयाः ।

**नटी**—( श्रुत्वा सविस्मयं ) अत्थ किं एयं ।

**सूत्रधारः**—आर्ये एष खलु दाशरथिर्मिथिलेश्वरतनयापरिणयनौपयिकमन्विच्छन्नार्यानिगदितं साधुकारेण प्रतीच्छति ।

**नटी**—अज्ज किंवा तस्स अप्पणो अत्थे मए मन्तिअं ।

**सूत्रधारः**—आर्ये त्वया तावत् सोऽचिरात् आरामः कृतशोभयेव मधुरससुखया सीतया अवतीर्णवसंतलक्ष्म्या इति निगदितं । अनेन पुनः सः अपि राजा रामः कृतशोभ एव मधुरसमुखया सीतया एतया अवतीर्णवसंतलक्ष्म्या इति गृहीतं ।

**नटी**—( सविस्मयं ) जुंजइ अहो उभअस्सवि अत्थस्स सद्दाणं अविसंवादो ।

**सूत्रधारः**—आर्ये इतस्तावदावां नेपथ्यशेषे प्रोत्सहावहे ।

**नटी**—जं अज्जो आणवेदि ।

( इति निष्क्रान्तौ ) **इति प्रस्तावना ।**

---

१ आर्य सुष्ठु भणितं । अद्य हि—सः अचिरात् आरामः कृतशोभयेव मधुरससुखया । सीतया एतया अवतीर्णवसंतलक्ष्म्या २ अत्र किमेतत् । ३ आर्य किं वा तस्यात्मनोऽर्थे मया मंत्रितं । ४ युज्यते अहो उभयस्यापि अर्थस्य शब्दानामविसंवादः । ५ यदार्यः आज्ञापयति ।

# प्रथमोऽङ्कः ।



( तत प्रविशति हृष्टो राम )

राम —अद्य खलु निर्विकल्प सपूर्णकल्पा न सर्कल्पा¹ । कुत ।

उपनमति मनोरथास्पद² सपदि फल सुलभेतर च तत् ।
श्रुतिपथसुखमित्थमुत्थित यदसुलभश्रवण यच्च श्रुत ॥ ७ ॥

इय च पुनरिदानीमलब्धदर्शनोत्सवानामप्यस्माक वैदेहीसमागमाय समुचितदृष्टान्तप्रत्ययात् प्रत्याशा प्रादुरभूत् । यथा—

दूरस्थमेतन्मिथुन यदिष्ट्वा
समानमिप्यत्यचिरादवश्यम् ।
मिथ पृथग्भूतमिद यथैव-
मर्थद्वय सघटमानमास्ते ॥ ८ ॥

( सहास ) केय कामिन शैली । यदसौ—

श्रुत यद्वा तद्वा नयति मदनोद्दीपनपदे
प्रकृत्या यच्चित्त गणयति च तत्तापजननम्³ ।
यदेवादौ वाञ्छेत्तदनु तदपि द्वेष्टि सहसा
कथ पार्श्वमाहो⁴ न हसति जन कामुकजनम् ॥ ९ ॥

किंचान्यत्—

सतापाना कातानिबधन यैव दुर्निवाराणाम् ।
तामेव किलान्विच्छति तेषामिच्छन् प्रतीकारम् ॥ १० ॥

( सस्मित ) इत्थ कामिजनमुपालभमाना स्वयमपि तत एव निर्वृत्ति-मलभमाना वयमेवात्रोदाहरण । मा तावद्धी अनीदृशि खल्वहमुपहासभूमि प्रेक्षावता । कुत —

---

१ नि सशय । २ मनोरथा । ३ जनयति । ४ समीपस्थ ।

वैदेही सकृदप्यसौ मम दृशोर्नैवाभवत्संनिधौ
विस्रंभः क्व च नैव तिष्ठतु मिथः का संकथायाः कथा ।
सा चास्मिन्मिथिलापुरे वयमितः पूर्वं ह्ययोध्यापुरे
श्रुत्वैव स्मरगोचरे विनिपतेत्को नाम मत्तः परः ॥ ११ ॥

इदं च पुनरिहात्याहितं ।

अस्मादृशां दुर्लभदर्शनाया–
मुत्कंठमानो जनकात्मजायाम् ।
मानोपरोधादसमीक्ष्यकारि
कथं न जिह्रेम्यहमात्मनोपि ॥ १२ ॥

( विचिंत्य ) अलममुना शोचनीयेन ममाद्वितीयस्य मेघोत्कंठासुलभेन संजल्पेन । येनैव सह सीतासंदर्शनोपायं विमृश्यन्नेनं संतापभरं लघूकरोमि । स चेदिदानीं चिरयाति वयस्यगार्ग्यायणः ।

( ततः प्रविशति विदूषकः )

विदूषकः–दाणिं क्खु मे सुलहदंसणिज्जदाए अओज्झाउरिए एअं मिहिलाउरिं पेक्खंतस्स णअणाणं णिव्वुदी जादा । विसेसदो उण दाणि वसंतुसवसमाअमकुसुमिदुज्जाणदंसणकोदुएण महणाराहणकोदूहलेण पुप्फावचयकंखाए जलकेलिदोहलेण वसंतदोलारोहणसमुसुअदाए पढममउ-

१ संभाषणस्य । २ इदानीं खलु मे सुलभदर्शनीयतया अयोध्यापुर्याः एनां मिथिलापुरीं पश्यतः नयनानां निर्वृत्तिर्जाता । विशेषतः पुनरिदानीं वसंतोत्सवसमागमकुसुमितोद्यानदर्शनकौतुकेन मदनाराधनकुतूहलेन पुष्पावचयकांक्षया जलकेलिदोहलेन वसंतदोलारोहणसमुत्सुकतया प्रथममुकुलितस्वहस्तसंवर्धितप्रमदवनद्रुमसंभावनसत्वरतया च गृहीतसुकुमारवासंतिकवेषेण इतस्ततः सविभ्रमं परिभ्रमता स्त्रीलोकेन सह संचारिणा च प्रेक्षकजनेन निरतिशयां शोभामुद्वहति मिथिलापुरी । एवं च पुनर्नयनचापल्यात् गोपालकुल्यमार्गेणैव परिभ्रमता मया वयस्यो विनिसृतः एतावतीं पुनः वेलां मामपश्यन् अपरिचितदेशसुलभया तंद्र्या मन्ये मयि समन्युस्तिष्ठति । तस्माद्यावद्वयस्यमेव यास्यामि ।

लिअसहत्थसंवड्ढिअपमदवणद्दुमसंभावणसत्तुरद्धाए अ गाहिअसोमारवासंति-अवेसेण इदो तदो सविब्भमं परिब्भमन्तेण इत्थिआलोएण सह संचारिणा अ पेक्खअजणेण णिरंदिसअं सोहं उव्वहइ मिहिलाउरी । एवं च पुणो णआण-चावलादो गोवालउलमग्गेण विअ परिब्भमतेण मए वअस्सो विणिसरिदो एत्तिअं पुण वेलं मं अदक्खंतो अपरिचिददेससुलहाए तंदिए मण्णे मयि समण्णू चिट्ठइ । ता जाव वअस्सं एव्व समासिदेमि । (परिक्रम्यावलोक्य च) ऐसो खु वअस्सो असहाओ जं एव्वं मं पडिवालंतो चिट्ठइ जाव उपसप्पेमि । (उपसृत्य) जेदु पिअवअस्सो ।

रामः—(दृष्ट्वा साधिक्षेपं) अहो अत्र भवतोप्यात्मंभरेरियतः कालस्य स्मृतिपथे वयमतिवर्तिष्महि ।

विदूषकः—मा खु मं तुमं असूएहि । अहं खु मिहिलाउरि वसंतूसवसि-रिदंसणेण विम्हिओ तुए विणा तं पेक्खिदुं अक्खमो इदो आहिंडिओ ।

रामः—तेन हि वसंतोत्सवसंवर्धितविभवां मिथिलापुरीमवलोकयंतो वयमपि विलोचने विलोभयामः ।

विदूषकः—तेण हि गच्छाम । ।

रामः—गच्छामतः ।

विदूषकः—इदो[6] ।

(उभौ परिक्रमतः)

विदूषकः—(पुरो निर्दिश्य) वअंस्स पेक्ख एसो खु मुहसमंचरंत-

---

१ एष खलु वयस्योऽसहाय यदेवं मा प्रतिपाल्यन् तिष्ठति यावदुपसर्पामि, । २ जयतु प्रियवयस्यः । ३ सतिरस्कारं । ४ मा खलु मा त्वमसूययाहं खलु मिथिलापुरि वसंतोत्सवश्रीदर्शनेन विस्मितः त्वया विना तां प्रेक्षितुमक्षम- इत आगतः । ५ तेन हि गच्छामः । ६ इत । ७ वयस्य पश्य एष खलु सुखमधुबल-चंचरीकनिनदप्रणर्तितपरः मयूरः मुदूरापतत्सुरभिपरिमलः पिप्पतत्पूर्णवर्णैरु-चिनितगगनभित्तिकः । सुमधुरश्रूयमाणमधुपस्खलद्रणिकाजनगीतपेशलो युवजनधैर्य-खिलीकरणकवाटको वेशवाटकः ।

न्चंचरीअणिणदपणज्जअपर मइडरो सुद्दूरावडंतसुरहिपरिमलो पिट्ठादयचुण्णवण्णअचितिअगअणभित्तिओ सुमहुरसुणिज्जंतमहुपअखिलज्जंतगणिआजणगीअपेसलो जुवजणधीरखिलीकरणकवाडओ वेसवाडओ।

रामः—वयस्य सम्यगुपलक्षितम्।

आपादयंतो रतिलंपटानां
यूनाममी वीथिविहारमैत्रीम्।
विलासिनीमाल्यविलेपगंधैः
स्त्यायंति सायंतनगंधवाहाः॥ १३॥

(अग्रतोऽवलोक्य)

प्रत्यंगोद्भिद्यमानस्तनमुकुलकृतप्राभृतार्घ्यैरुरोभि-
र्दंतोन्मेषोपहारैः प्रहसितवदनैर्लोलनीयैर्वचोभिः।
विभ्रांतोत्फुल्लनेत्रा ललितभुजलतामंदविक्षेपलीलाः
कंदर्पं दर्पयंत्यो मृद्दामिह गणिका दारिकाः संचरंति॥ १४॥

विदूषकः—वंअस्स पेक्ख एत्थ महामदविब्भमवेसवहूणं।

रामः—(निर्वर्ण्य)

अंसोपांतविलंबिकेशरचनास्विद्यत्कपोलास्फुर—
द्दिंबोष्ठ्यो मधुपानमंथरपदन्यासस्वनन्नूपुराः।
व्याकीर्णालकयासघूर्णकलुषा व्याघूर्णमानेक्षणा
लीना नृत्यरसेन वेशवनिता रथ्यामलंकुर्वते॥ १५॥

(नेपथ्ये)

एषा खलु भर्तृदारिका सीता कामदेवायतनपर्यंतोपवनदोलागृहे वसंतदोलारोहणोपहारेण वसंतमाराधयितुमागमिष्यति। तदिदानीं।

इतस्तावत्सर्वाः परिजनवृता वेशवनिता
वसंताहार्याहार्यद्विगुणितवसंतोत्सवगुणाः।

१ वयस्य पश्यात्र महामदविभ्रमवेशवधूनाम्।

मकरन्दाक्षेपोच्चलितमकरांकध्वजपटं
मदोद्भेदस्थानं विशति रतिनाथस्य भवनम् ॥ १६ ॥

किं च ।

मृदंगं वाद्यंतां मधुरमिदमार्दंगिकजनै—
र्ध्रुवं गेयं गेयं श्रवणसुभगं गातृभिरपि ।
सलीलं नर्तक्यो विरचयत संगीतरचनां
कृतप्रेक्षोत्सुक्यो भवतु विटसामाजिकजनः ॥ १७ ॥

रामः—( श्रुत्वा सहर्षं ) वयस्य कामदेवभवनपर्यंते वसंतदोलारोहणं करिष्यति विदेहेश्वरदुहितेत्युद्घोष्यते तदिदानीं तस्यैव मार्गमादर्शय येनाहं मैथिलीदर्शनेन चक्षुषी सफलीकरोमि ।

विदूषकः—जं भवं आणवेदि । इदो इदो

( उभौ परिक्रामतः )

रामः— ( सोत्कंठं )

प्रारंभाभिमुखे पयोदसमये या चातकस्योत्कता
शीतांशौ निषधाचलांतिकगते हर्षश्चकोरस्य यः ।
आश्वासो मधुपस्य चूतविटपे यो निष्कसत्कोरके
सीतादर्शनसन्निकर्षजनिता तादृग्ममासौ धृतिः ॥ १८ ॥

विदूषकः—वँअस्स वरं कामदेवं वरअ ।

रामः—( निर्वर्ण्य ) अहो निरतिशया लक्ष्मीः । इह हि—

वामेनाप्रवर्दीनचीनवसनाश्लिष्यत्तुलाकोटिना
श्लिष्टार्द्धोरुकवद्धलक्ष्यवपुषा वामेतरेणांघ्रिणा ।
आमृष्टस्तनपत्रभंगकपिशैः संव्यानकौशेयकैः
संवृण्वंति समंततस्तु वदना धैर्यां यशः कामिनाम् ॥ १९ ॥

---

१ यद्भवानाज्ञापयति । इतः इतः । २ वयस्य वरं कामदेवं वरय ।

( अन्यतोऽवलोक्य ) अहो भावानामपि रसांतरमास्कंधमाम्रेडितानि विलसितानि । तथाहि ।

> इयं व्रीडा व्रीडामनुभवति रम्यां मृगदृशा–
> मुद्यमासुत्कंठां भजति पुनरुत्कंठितमपि ।
> स्वयं लीला लीलांतरमुपगता मायाति मदो
> विलासैर्विभ्रांतं भवति मदनो जातमदनः ॥ २० ॥

( नेपथ्ये )

वसत्येह

विदूषकः—वँअस्स ओसरणसद्दो सुणिअदि मण्णे आअच्छदि तत्त-होदी सीदा । किं अत्थ काअव्वं ।

रामः—( विलोक्य ) वयस्य एप इदानीं कृतमकरध्वनपूजोपस्थानो दोलागृहाभिमुखो निर्गच्छति वारविलासिनीजनः तदनुपलक्षिता एव वयं विविक्ते कामदेवगृहाभ्यंतरे स्थास्यामः ।

विदूषकः—ऍव्वं करेह्न ।

( तथा कुरुतः )

( ततः प्रविशति सपरिवारा सीता विनीता च )

विनीताः—ईदो इदो भट्टिदारिआ ।

( सर्वाः परिक्रामंति )

विनीता—( पुरो निर्दिश्य ) ऍअं सु कअपुप्फोपहारालंकारं रअणचुण्णणिव्वत्तिअवसंतपूआसमुदायारं समंतदो सज्जीकअं दोलाधरअं जाव पविसदु भट्टिदारिआ ।

---

१ अपसरत । २ वयस्य अपसरणशब्दः श्रूयते मन्ये आगच्छति तत्रभवती सीता किमत्र कर्तव्यं । ३ एवं कुर्मः । ४. इत इतः भर्तृदारिका । ५ एतत्खलु कृतपुष्पोपहारालंकारं रत्नचूर्णनिर्वर्तितवसंतपूजासमुदाचारं समंततः सज्जीकृतं दोलागृहं यावत् प्रविशतु भर्तृदारिका ।

**सीता**—जं पिअसही भणादि ।

( सर्वाः प्रविशन्ति )

**विनीता**—( दोला हस्तेन गृहीत्वा ) ऐसा तुम पडिवालेइ रअणदोला जाव आरोहदु भट्टदारिआ ।

**सीता**–सहि तेण हि आरुहेमि देहि मे हत्थावलंब ।

**विनीता**—जं भट्टिदारिआ आणवेदि । ( तथा करोति )

**सीता**–( दोलामधिरोहति ) **विनीता**–( आकर्षणरज्जुमाक्षिपति ) ।

**सीता**–सहिओ जाव गाअम्म ।

**सख्य**–जं पिअसही भणादि ।

( सर्वा गायति )

दंसणसमुसुओ संपइ पिअं पिआदंसिदसमाअमो पावइ क्खु कोदुअं ।

**राम**–वयस्य दोलागृहमुपागता न वा जानकीति कथं जानीमः ।

**विदूषक**–इदो ओसरिअ अमुणा पक्खदुवारेण ह पेक्खेमि । ( तथा कृत्वा ) आरुह्यायेव तत्तहोदी दोला ।

**राम** –( सहर्षं ) तेन हि सफलप्रयत्नाः स्मः । ( उपसृत्य विलोक्य च सोत्कंठ )

**उत्कंठाना बीज मनोरथाना परिभ्रमस्थानम् ।**

**हृदयस्य समुच्छ्वसित तदिद मम सपदि सन्निहितम् ॥२१॥**

विदूषक –एसा सअं चेअ देवी लच्छित्ति समत्थेमि ।

---

१ यत्प्रियसखी भणति । २ एषा त्वा प्रतिपालयति रत्नदोला यावदारोहतु भर्तृदारिका । ३ सखि तेन हि आरोहामि देहि मे हस्तावलंबनं । ४ यद्भर्तृदारिका आज्ञापयति । ५ सख्य यावद्गायाम । ६ यत्प्रियसखी भणति । ७ दर्शनसमुत्सुक सम्प्रति प्रियां प्रियदर्शितसमागम प्राप्नोति खलु कौतुक । ८ इतोऽवसृत्यामुना पक्ष द्वारेणाहं पश्यामि । ९ आरूढैव तत्रभवती दोलाम् । १० एषा स्वयं चैव देवी लक्ष्मीति समर्थयामि ।

**रामः**–( निर्वर्ण्य ) अहो रूपानुरूपं वयः वयोनुरूपं लीला लीलानुरूपो विभ्रमो विभ्रमानुरूपं सौष्ठवं । किंच ।

> स्वयं सौंदर्यसर्वस्वमसाधारणसुंदरम् ।
> अनया लब्धतादात्म्यमात्मानं श्लाघते ध्रुवं ॥ २२ ॥

**विनीता**—भट्टदारिए जइ वसंतदोलारोहणं संमानिदुं इच्छसि तदो तुमं वि गाएहि ।

**सीता**—हंला किं मं अतिमेत्तपसंसाए लहू करेसि । होदु ण दाव पि-असहिवअणं लंघेमि दस्सणसमूसु ( *इतिपूर्वोक्तमेव गायति* )।

**रामः**-( श्रुत्वा सहर्षं स्वगतं ) हंत मामिवोद्दिश्येदमुक्तं ( प्रकाशं ) अये इयमनवद्यवेषानुसरणसरसामंदनिष्यंदमानमधुरसहितानुरागकंदलितकंद-र्पकेलिर्वसंतविभ्रमभूषा कांभोजिभाषा ( निर्वर्ण्य ) अहो आभिजात्यं गीतस्य । पश्य ।

> सालंकारमनिष्ठुराक्षरपदं प्रव्यक्तवर्णक्रमं
> पूर्णांगं सलयं कलानियमितं प्रस्पष्टतानश्रुतिः ।
> तत्कालोचितगेयवस्तुरचितां प्रासादकिं च ध्रुवा-
> माश्रित्यैव हि गीतमेतदधुना गीतं सुकंठ्यानया ॥ २३ ॥

अतिमात्रं च सा प्रसाधिता दोलारोहणेन । अस्या हि ।

> मृदुतररणत्कांचीदाम क्कणन्मणिनूपुरं
> निकपदलकप्रांतक्लाम्यद्विशेषकवर्णकम् ।
> शिथिलकवरीबंधं स्विद्यत्कपोलतलं वपुः
> श्रियमपि परां दोलारोहच्छलादधिरोहति ॥ २४ ॥

---

१. भर्तृदारिके यदि वसंतदोलारोहणं संमानयितुमिच्छसि ततस्त्वमपि गायस्व । २ हे सखि किं मामतिमात्रप्रशंसया लघूकरोषि । भवतु न तावत् प्रियसखिवचनं लंघयामि, दर्शनसमुत्सुकः ।

विनीता—सॅव्व एद सोहण वसतदोलारोहणं आरुहतो स पिओ एव्व केवल ण दिस्सई ।

सरय—हॅला सुट्ठु भणिअं ।

सीता—( लज्जां नाटयती स्वगत ) दुल्लहो खु सो कालो जस्सि पिओ जणो दस्सणपह पावदि जदो सवणेक्कगोअरे अयोज्झाउरिए तम्हि जणे चिरपरूढकोउहलदुल्ललिअ एअ मे हिअअं ।

विनीता—एँव च पुण अह तक्केमि एदेण सोहणेण वसतदोलारोहणेण समाराहिओ अइरेण इमिए दंसेदि पिअ वसतोत्ति ।

सरयः—सॅहि एव ।

रामः—अहो वस्त्वन्तरसमवेता अपि गुणा युगपन्मयि सक्रामन्ति । अस्या हि—

नेत्राभ्यां सह विभ्रमव्यतिकरं मध्येन सार्थक्रमं
हारेण स्खलितं सहैव भजते कंपं कुचाभ्यां सह ।
स्रस्तं सामि सहस्तनांशुकदशाप्रांतेन चाकृष्यते
चित्र सम्प्रति दोलया सह पुनर्दोलायते मे मनः ॥ २५ ॥

विनीता–( आकर्ण रज्जुमाक्षिपती उच्चैर्गायति )

जा आरुहइ दोलं कंतेणावि वसते ।
सीसंमि खु जुवईणं सा जोव्वणवदेण ॥ २६ ॥

---

१ सर्वमेतत् शोभन वसतदोलारोहण आरोहत स प्रिय एव केवल न दृश्यते । २ सखि सुष्ठु भणित । ३ दुर्लभ खलु स कालो यस्मिन् प्रियो जनो दर्शनपथ प्राप्नोति यत श्रवणैकगोचरेऽयोध्यापुर्यां तस्मिन् जने चिरप्ररूढकुतूहलदुर्ललित एतन्मे हृदय । ४ एव च पुनरह तर्कयामि एतेन शोभनेन वसतदोलारोहणेन समाराधितेऽचिरेणैतस्या दर्शयति प्रिय वसत इति । ५ सखि एव । ६ या आरोहति दोला कान्तेनापि वसते शीर्ष खलु युवतीनां सा यौवनवतानां ।

**सीता**—( सविषादमात्मगतं ) अयं उण जणो सुदूरुक्कंठदाए अकअदारिसभागदेओ ।

**विनीता**—भट्टिदारिए किं तुमं ण हि गाअसि जाव गाएहि ।

**सीता**—हंज्जे अलं एतिएण दोलारोहणेण किलम्मंति खु मे अंगाइं ।

**विनीता**—( विनिरूप्य आत्मगतं ) मॆण्णे एसा अहिगअगीअत्था अप्पाणं अतहहूयं मण्णंती खिज्जइ । ता अत्थि किंवि इमाए एअंते ठिदं । ( प्रकाशं ) तेणॆ हि मं ओलंबिअ अवरुहेहि ।

**सीता**—जं पिअसहि भणादि ( अवरुह्य ) हॅला एहि गच्छम्म ।

**विनीता**—ईदो ।

( सर्वाः परिक्रामंति )

**विनीता**—( अपवार्य ) भट्टिदारिए एहि कामदेवघरअं पविसिअ अब्भत्थेमो तुह उक्कंठिअं ।

**सीता**—( साशंकमपवार्य ) किं मॆए उक्कंठिअं ।

**विनीता**—( अपवार्य ) किं मॆहवि पच्छदिअदि ।

**सीता**—( आत्मगतं ) कॆहं गहिअभावम्हि पिअसहिए । ( अपवार्य ) सॆहि कहं तुह पच्छदेमि । जइ अहं अप्पणा पच्छादेमि तदा खु तुह पच्छादेमि ।

---

१ अयं पुनर्जनः सुदूरोत्कंठतया अकृततादृशभागधेयः । २ भर्तृदारिके किं त्वं न हि गायसि यावद्गायस्व । ३ सखि अलमेतावद्दोलारोहणेन क्लाम्यति खलु मेगानि । ४ मन्ये एषाधिगतगीतार्थात्मानमतथाभूतं मन्यमाना खिद्यति । तस्मादस्ति किमपि एतस्या एकाते स्थितं ।५ तेन हि मामवलम्ब्यावरोहतु । ६ यत्प्रियसखी भणति। ७ सखि एहि गच्छाम. । ८ इतः ९ भर्तृदारिके एहि कामदेवगृहं प्रविश्याभ्यर्थयामस्तवोत्कंठितं । १० किं मयोत्कंठितं । ११ किं ममापि प्रच्छाद्यते । १२ कथं गृहीतभावास्मि प्रियसख्या । १३ सखि कथं तव प्रच्छादयामि यदि अहं आत्मनः प्रच्छादयामि तदा खलु तव प्रच्छादयामि ।

**रामः**—( सस्मितं सीतां प्रति ) अयि सुंदरि ।

श्रुत्वैव त्वां भजति पदवीं यो दृढोत्कंठितानां
दृष्ट्वा भूयो न भजति धृतिं यः सदा त्वामपश्यन् ।
इत्थं चाद्यप्रणतशिरसा प्रार्थ्यते यो भवत्या
संप्राप्य त्वं कृतिनमचिरात् कामिनं तं रमेथाः ॥ २७ ॥

**विनीता**— ( आत्मगतं ) [1]भावंतरगब्भिअं विअ से वअणं ण एस केवलं मम्महत्तेण वट्टइ । ( निरूप्य अपवार्य ) [2]भट्टिदारिए रामक्खरलच्छिअ-अंगुलिमुद्दिआ इमस्स हत्थे दिस्सइ सुदं च मए आअदो मिहिलम्हि दासरही रामोत्ति ।

**सीता**— ( सहर्षात्मगतं ) [3]अम्हो एसो खु सो रामो जो मए सुणिज्जएव पुव्वं उक्कंठं जणेदि दाणिं खंडिएत्था मे उक्कंठा ।

**विनीता**—( अपवार्य ) [4]भट्टिदारिए वंचिआ खु खमेह इमस्स रुव-सोहग्गेण ।

( नेपथ्ये । )

[5]ईदो इदो ।

**विनीता**—( कर्णं दत्वा ) [6]भट्टिदारिए समासण्णो सहिअणालाओ ताव गच्छम्ह ।

**सीता**—( रामं प्रति ) [7]हंडों अम्हे दाणिं किं पुच्छेमो ।

**रामः**—पुनर्दर्शनाय ।

**सीता**—[8]अज्ज इमे भाअदेआ ।

---

१ भावांतरगर्भितमिवास्य वचनं न एष केवलं मन्मथत्वेन वर्तते । २ भर्तृदारिके रामाक्षरलाञ्छिताङ्गुलिमुद्रिकास्य हस्ते दृश्यते श्रुतं च मयागतो मिथिलायां दाशरथी राम इति । ३ अहो एष खलु स रामो यो मया शृण्वन्नेव पूर्वमुत्कंठां जनयति इदानीं खंडितायां मे उत्कंठा । ४ भर्तृदारिके वंचिता खलु क्षमस्वास्य रूपसौभाग्येन । ५ इत इतः । ६ भर्तृदारिके समासन्नः सखिजनालापः तावद्गच्छामः । ७ सखि वयमिदानीं किं पृच्छामः । ८ आर्य इमानि भागधेयानि ।

विनीता—ईदो इदो भट्टिदारिआ ।

( परिक्रम्य निष्क्रान्ता सीता विनीता च )

रामः—( सोत्कंठ ) कथमेकपद एव वयमवस्थान्तरमारोपिताः सीतया । तथा हि—

विचलितमणिहारं किंचिदानम्रमध्यं
क्वणितवलयमीषद्भुग्नसीमंतलेखम् ।
अलसनयनमर्धस्रस्तकर्णावतंसं
युगपदुरसि बद्धं मन्मनश्चांजलिश्च ॥ २८ ॥

किंच—

नीवीमुच्छ्वसितां मया सह मनाक् संलप्य नाभिर्हृदां
दोलारोहणविश्लथां रचयितुं व्यापारयंत्या करम् ।
उत्कंपात्तरलोरुचारुचरणन्यासं व्रजंत्या तया
कामिन्या ननु कामदेवभवनात्कामाय चास्म्यर्पित ॥ २९ ॥

( नेपथ्ये )

ईदो इदो पिअवअस्सो

राम.—कथमाह्वयति वयस्य ।

( परिक्रम्य निष्क्रांत )

इति श्री महागोविंदस्वामिन सूनुना हरितमल्लेन विरचिते
मैथिलीकल्याणनाम नाटके प्रथमोऽङ्क ॥ १ ॥

---

१ इत इतो भर्तृदारिके । २ इत इत प्रियवयस्य ।

## द्वितीयोऽङ्कः ॥ २ ॥



( ततः प्रविशति विदूषकः )

विदूषकः—पुव्वं ताव अयोज्झाउरीं पहुदि तत्तहोदिं मिहिलेसरस्स पिअदुहिअरं सुण्णंतो एव्व सुददाणरज्जो विअ बह्मणो बलिअं उक्कंठिओ पिअवअस्सो । इदो पुण जदा दोलाघरए दिट्ठा तत्तहोदी सीता तदो आरभिअ अण्णारिसहिअओ चिंतोवराअकलुसिअणअणो ण सअणे णिव्वुदिं लहेइ ण णिसासु णिद्दं पडिवज्जइ केवलं तं चेअ ज्झेउं पारेदि । मं पुण सीआविहारुद्देसदस्सणत्थ तहिं तहिं पेसंतो खणमेत्तंवि अप्पणो पासे विस्सद्धं ठादुं ण सहइ, अहं च पुण पणट्ठपहो विअ वच्छो इदो तदो सीअं अण्णेसंतो किअपरीभमो अप्पाणं केवलं आआसेमि । एसा पुण सीदा दुस्साहिअ विअ देवदा ण कदाइ सण्णिहिं पडिवज्जइ ( सनिर्वेदं ) एव च अणिवत्तिअमित्तजणोइदसक्कारदाए बद्धसोहत्थो णिव्विण्णो दाणिं अहं पिअवअस्सं दट्ठुं तहवि सिणेहपरिहीणो ण तेण विणा खणं पि वट्टिउं खमे ता दाणिं वअस्सस्स येव्व पासं गमिस्सं । ( परिक्राम्यति )

---

१ पूर्वं तावदयोध्यापुरीं प्रभृति तत्रभवतीं मिथिलेश्वरस्य प्रियदुहितरं शृण्वन्नेव श्रुतदानराज्य इव ब्राह्मणो बलवदुत्कंठितो प्रियवयस्यः । इतः पुनर्यदा दोलागृहे दृष्टा तत्रभवती सीता तत आरभ्य अन्यादृशहृदयः चिंतोपरागकलुषितनयनो न शयने निर्वृतिं लभते न निशासु निद्रां प्रतिपद्यते केवलं तामेव ध्यातुं पारयति । मां पुनः सीताविहारोद्देशदर्शनार्थं तस्मिन् तस्मिन् प्रेषयन् क्षणमात्रमप्यात्मनः पार्श्वे विस्रब्धं स्थातुं न सहते अहं च पुनः प्रणष्टपट इव वत्स इतस्ततः सीतामन्वेषन् कृतपरिश्रम आत्मानं केवलमायासयामि । एषा पुनः सीता दुस्साधिता इव देवता न कदापि संनिधिं प्रतिपद्यते । एवं चानिवर्तितमित्रजनोचितसत्कारतया बंध्यासौहार्दनिर्विण्ण इदानीमहं प्रियवयस्यं द्रष्टुं तथापि स्नेहपराधीनो न तेन विना क्षणमपि वर्तितुं क्षम तस्मादिदानीं वयस्यस्यैव पार्श्वं गमिष्ये।

( ततः प्रविशति सोत्कंठो रामः )

रामः—

उत्कंठितं हृदि यदात्मनि गोपयंत्या
तद्धीतितादिव तया करसंघटेन ।
बद्धोंजलिः किमपरं कथयामि तस्मै
बद्धोंजलिर्निभृतमंजलये मयापि ॥ १ ॥

अयं च पुनरत्र मन्मथस्यावष्टंभः । यत् किल ।

सव्याजमर्धचलितानि निरीक्षितानि
स्रस्तस्तनांशुकदशांतविकर्षणानि ।
आसन्निसर्गमधुराणि सहैव संख्या-
मोघानि कान्यपि च मन्मथजल्पितानि ॥ २ ॥

( निःश्वस्य ) अहो दुर्धरो मन्मथः । मम हि ।

अंगेष्वनंगस्य शराशरव्ये-
ष्वापुंखमग्नास्सफलास्तुदंति ।
सीतार्थिनो मे विफलाश्च जाता
विश्वास्यमेषां न च सौमनस्यम् ॥ ३ ॥

न खल्वसौ सतां मनः प्रीणयति मनसिजस्य [illegible] । ( आकाशे लक्ष्यं बद्ध्वा )

अतुलमफलप्रत्याशाभिः सखीकुरु नैव मां
घटय यदि वा त्वं कामिन्या तदा [illegible] ।
द्वयमपि भवान् स्वीकुर्वन् कथं च न [illegible]
विघटितफलानप्रारंभा भवंति [illegible] ॥ ४ ॥

( विभाव्य ) मा तावद्भीः [illegible] । [illegible] ।

असौ दग्धोऽनंगः प्रभवति [illegible] व्यथयितुं
न चासौ दुर्दांतप्रकृति[illegible] ।

उपालंभस्थानं न परमपि पश्यामि विमृशन्
स्वयं सीता सैव प्रसभमिह मामुत्सुकयति ॥ ५ ॥

विदूषकः— ( पुरो विलोक्य ) ऐसो खु पिअवअस्सो जाव उवसप्पामि। ( उपसृत्य ) जेदु पिअवअस्सो ।

रामः—अशृण्वन् औत्सुक्यं खलु जनस्य सर्वथा पौरोभाग्याय । तथाहि-

कृत्यांतरविनिवृत्तः कविजन इव विजनमाश्रितो देशः ।
अंतश्च किमपि जल्पन् विभामि चिंतां विनम्रमुखः ॥ ६ ॥

विदूषकः—( आत्मगतं ) कैहं आगअंपि मं ण जाणइ अण्णचित्तो वअस्सो ( पुनः प्रकाशं ) जेदु पिअवअस्सो ।

रामः—( दृष्ट्वा ) कथं वयस्य वयस्य उपविश्यतां ।

विदूषकः—जं वअस्सो आणवेदि । ( उपविशति )

रामः—वयस्य अपि संभाव्यते नस्समाश्वासः ।

विदूषकः—एवं उच्छहंते मइ किं वा ण संभाविअदि ।

रामः—( सादरं ) कथय क्वेदानीं द्रक्ष्यते सीता ।

विदूषकः—झाणे ।

रामः—किं तत्रापि भवानेव प्रार्थनीयः । पश्य ।

तन्मया मम संकल्पास्तन्मयं मम चिंतितम् ।
तन्मयानि ममाक्षाणि तन्मयं मम जीवितम् ॥ ७ ॥

विदूषकः—( सोत्प्रासं ) अण्णं ण पेक्खामि अहं तुह आतंकठाणं ।

रामः—यदि मदन्योसि तदा न पश्यसि वयस्य तिष्ठत्वेतत् किं भवानत्र मैथिलीं प्रति समर्थयते ।

---

१. एष खलु प्रियवयस्यः यावदुपसर्पामि । २ जयतु प्रियवयस्यः । ३ कथमागतमपि मां न जानाति अन्यचित्तो वयस्यः । ४ जयतु प्रियवयस्यः । ५. यद्वयस्य आज्ञापयति । ६ एवमुत्सहमाने मयि किं वा न संभाव्यते । ७ ध्याने । ८ अन्यम पश्यामि अहं तवातंकस्थानम् ।

विदूषकः—सुणाहि दाव एअं समाहिअं ।

रामः—समाहितमनसः स्मः ।

विदूषकः—सुदं एव्व दाव भवं कण्णपरंपराए समुसुएइ जुवइजणं किं पुण कामदेवभवणे तह दिट्ठो तह अ णाम संभाविदो ।

रामः—तथैव हि भवतोक्तं ।

विदूषकः—जेह अ मोहं परिणमिस्सदि ।

रामः—भवांस्तु कामं सूनृतवचनः । सा पुनरस्माकं दुर्लभदर्शना ।

विदूषकः—कहं दुल्लहदसणा लद्धपुव्वं खु ताए दसणं ।

रामः—

अपरिहृतविमर्दं संगमं न प्रतीक्ष्ये
प्रणयरसनिषिक्तं नैव संभाषितं च ।
यदि भवति ममासौ स्वैरमद्यापि दृश्या
किमिव मम कृतित्वे शिष्यतेऽन्विष्यते वा ॥ ८ ॥

विदूषकः—( सस्मितं ) अद्दीयेव्व केवलं तत्तहोदिदसणे तुह किदत्थदाए अवसेसो ।

रामः—किमिव ।

विदूषकः—तह खु अहं उव्वाहसत्थिवाअणसक्कारं ण लंभिदो होमि ।

रामः—( सस्मितं ) तेन हि मम कृतित्वमवशिष्यत इति साधूक्तमविकल्पमेव कृतिन्त्रमनवर्लीढमास्त इति ब्रूहि ।

---

१ शृणु तावदेतत् समाहितं । २ श्रुत एव तावद्भवान् कर्णपरंपरया समुत्सुकयति युवतिजनं किं पुनः कामदेवभवने तथा दृष्टः तया च नाम संभावितः । ३ यदा मोहं परिणमिष्यति । ४ कथं दुर्लभदर्शना लब्धपूर्वं खलु तस्या दर्शनं । ५ अस्यैव केवलं तत्रभवतिदर्शने तव कृतार्थतया अवशेषः । ६ तथा खलु अहं उद्वाहस्वस्तिवाचकमत्कारं न लंभितो भवामि ।

विदूषकः-ऐव्वं एअं जह उव्वाहसात्थिवाअणोवहारसक्करेण समाराहिओ भविस्संत तह तुमपि अइरेण तत्तहोदिपरिणअणकल्लाणं लहेहि ।

रामः-शिरसा प्रतिगृह्णीमहे ।

विदूषकः-पुव्वं करेण गहिस्ससि पुणो सिरेण ।

रामः-वयस्य साध्वीमिमामुक्तिं पश्य न तथा दयिता समन्मथा च तथा पातितमर्ध वीक्षितं मनसः परितोषणं यथा प्रियमित्रैः कथितं प्रियां प्रति ।

विदूषकः-अणाराहिअवअस्सस्स मारिसस्स जणस्स केवलं लज्जाए होदि पअत्तो ।

रामः-अलमुद्वेगेन । कुतः । अनवाप्तफलो यथा वयस्यः प्रियमित्रस्य कृते कृतप्रयत्नः विवृणोति सुहृत्त्वमत्युदारं न तथाऽवाप्तफलो विना प्रयत्नात् ।

विदूषकः—होदु एवं तहवि कहं विअ तुमं अप्पलहुअं एअं कालं अइवाहइस्ससि ।

रामः—क नु खलु वयं दुरतिवाहमेनं कालमतिवाहयामः । ·

विदूषकः— ( विचारयन् ) सो देसो तारिसो एसो देसो एरिसो ( विभाव्य ) आ वअस्स दिट्ठो खु तुह विणोदणजोग्गो पएसो ।

रामः—कथय ।

विदूषकः—अत्थि राजघरअस्स उत्तरदो माहविवणं णाम मणोविलोहणं उववणं तहिं दाव गच्छेमो ।

---

१ एवमेतद्यथोद्वाहस्वस्तिकोपहारसत्कारेण समाराधितो भविष्यामि तथा त्वमपि अचिरेण तत्रभवतीपरिणयनकल्याणं लभस्व । २ पूर्वं करेण गृहीष्यसि पुनः शिरसा । ३ अनाराधितवयस्यस्य मादृशस्य जनस्य केवलं लज्जायै भवति प्रयत्नः । ४ भवत्वेवं तथापि कथमिव त्वमल्पलघुकं एनं कालं अतिवाहयिष्यामि । ५ स देशस्तादृशः एष देश ईदृशः । ६ आ वयस्य दृष्टः खलु तव विनोदयोग्यः प्रदेशः । ७ अस्ति राजगृहस्योत्तरतः माधवीवनं नाम मनोविलोभनमुपवनं तस्मिन् तावद्गमिष्यावः ।

रामः— यदाह भवान्।

विदूषक—उट्ठेदु भवं[1]।

( उभावुत्तिष्ठत )

रामः—वयस्य माधवीवनस्य मार्गमादेशय।

विदूषकः—ईदो इदो[2]।

( उभौ परिक्रामत )

राम—( सर्वैचित्यं कामदेवभवन प्रति गच्छति )

विदूषकः–( पृष्ठतो विलोक्य ) कँह अण्णादो पत्थिदो वअस्सो[3] ( उपसृत्य हस्ते गृहीत्वा ) वँअस्स ण खलु एसो माहविवणमग्गो एसो णं कामदेवघरअमग्गो ता इदो एहि[4]।

राम –( पदांतरे स्थित्वा ) अहो ममास्यानामिनिवेशिता। (आत्मान प्रति)

य एयाविश्रांतो मदनमृगयुस्त्वां मृगयते
स चापस्त्वच्चेतो मृग मृगयया श्लाघितबलः।
मदन्यस्तस्यैवं भवनमभियातुं प्रयतता–
मनुन्मत्तः को वा तदलमलमात्मार्चित इतः॥ ९॥

अपरावर्तते।

विदूषक–ईदो इदो[5]।

( परिक्रामत )

विदूषकः–( पुरो निर्दिश्य ) वअस्स एद त माहविवण[6]।

रामः–यावत्प्रविशाम.।

( उभौ प्रविशत )

रामः–( निर्वर्ण्य ) अहो माधविवनस्य परा माधवी लक्ष्मी। अत्र हि–

---

१ उत्तिष्ठतु भवान्। २ इत इत। ३ कथमन्यत प्रस्थितो वयस्य। ४ वयस्य न खल्वेषो माधवीवनमार्ग एष ननु कामदेवगृहमार्ग तस्मादित एहि। ५ इत इत। ६ वयस्य एतन्माधवीवनं।

मलयपवननुन्नं पल्लवं वेपमानं
वहति हृदयमंतर्मन्मथार्तो युवेव ।
विसृजति मधुबिंदुच्छद्मना वाष्पबिंदून्
पुलकित इव मुग्धैः कोरकैरेष चूतः ॥ १० ॥

अपि च ।

कुसुमचषकोदरगतं सरसं रागोपदंशमधु पीत्वा ।
मंथरगमना मधुरं गायंति मदोद्धताः मधुपाः ॥ ११ ॥

विदूषकः—ऐदं खु विआसुम्मुहकुसुममंजरिभरभरिअसहआरमहीरुहसिहरपब्भारं महुरसलालसपरिब्भमंत सुलहमहुअरं आउहागारं विअ लक्खिज्जइ महुरवसिलीमुहरासिअस्स कुसुमाउहस्स ।

रामः—वयस्य सम्यगुपलक्षितं । इह हि ।

उत्कंठयंति मधुपान् कलिकास्तरूणा–
मुच्चिद्रयंति मुकुलानि चलाद्द्विरेफाः ।
उत्तंसयंति पवनाः सुमनःपरागा–
नुद्दीपयंति मदनं मरुतां विहाराः ॥ १२ ॥

( विचिंत्य ) इदमिह संप्रधार्य येनास्य मनोभवस्य ।

कोदंडं किल कोमला सुमनसस्ता एव चित्रं शरा–
स्तत्र ब्रूम शिलीमुखैरथ कथं जीवा गुणः कल्पितः ।
तद्विस्मृत्य सहामहे कथमिदं प्राज्ञैरनुज्ञायतां
यद्दुर्लक्ष्यममुष्य वक्ति पृथिवीलक्ष्यं मनः कामिनाम्॥१३॥

विदूपकः—वंअस्स जस्स दे मअण एव्व ईरिसिए अवत्थाए कारणं सो तुमं चेअ तं मअणं उवहसंतो दाणि उवहसणिज्जो ।

---

१ एतत्खलु विकासोन्मुखमंजरिभरभरितसहकारमहीरुहशिखरप्राग्भारं मधुरसलालसपरिभ्रमत्सुलभमधुकरमायुधागारमिव लक्ष्यते मधुरवशिलीमुखरासिकस्य कुसुमायुधस्य । २ वयस्य यस्य ते मदन एवेदृशाया अवस्थायाः कारणं स त्वमेव तं मदनमुपहसन्निदानीमुपहसनीयः ।

रामः—एवमेतत् इत्थं नाम प्रत्यक्षमपि कः पर्यालोचयेत्।

विदूषकः—मं[1]।

रामः—(सस्मितं) कोऽन्यः।

विदूषकः—णं कोवि[2]।

रामः—वयस्य अलमुपालम्भेन अनात्मज्ञत्वमप्युपालंभोपक्रममेव मन्मथव्यथायाः।

विदूषकः—विसेसदो[3] दाव वसते।

रामः—विशेषतो रामे इति च ब्रूहि। कुतः।

शरसंधानचुम्बित्वं रामे रामासमुत्सुके।
यथा कुसुमबाणस्य न तथाऽन्यत्र जातुचित्॥ १४॥

विदूषकः—सव्वोवि[4] खु कामुओ अप्पाणं एव्व समत्थेदि।

रामः—तथा वास्तु।

विदूषकः—वअस्स[5] पक्ख पक्ख एसो खु महुविंदुसिहरच्छटादूसरदाए सिसिरसमाअमसंकं जणेइ दाणिं सहआरो।

रामः—सम्यगुपलक्षितं। तथाहि।

मधुरसपृषतप्रवर्षिणि सुखशिशिराः समुदीक्ष्य मंजरीं।
शिशिरसमयशंकयाकुला न जहाति कोटरमध्यकोकिलाः॥ १५॥

यावदेतान् प्रतिबोधयामि।

त्यजत मधु सगधाः कोकिला निर्विशंक
तरुविटपकुटीराभ्यन्तरावासमेदम्।
भजत सहचरीभिः सार्धमेतानिदानी-
मुपवनसहकारानुल्लसन्मंजरीकान्॥ १६॥

---

१ ममान्। २ न कोपि। ३ विशेषतस्तावद्वसते। ४ सर्वोपि खलु कामुक आत्मानमेव समर्थयते। ५ वयस्य पश्य पश्यैष खलु मधुबिंदुशीकरच्छटाधूसरतया शिशिरसमागमशंका जनयतीदानीं सहकारः।

विदूषकः–वैअस्स इद् एव्व उवविसम्म ।

रामः–यथा भवानाह ।

[ उपविशतः ]

रामः–( स्पर्शं रूपयित्वा ) वयस्य कथमिवास्माभिरत्र क्षेमेण स्थीयते । इह हि–

उद्भेदोन्मुखकुड्मला विधुनुते वासंतिका मंजरी-
रागुंजन्मधुपांगनामुखरितप्रांतो वसंतानिलः ।
क्रीडापन्नसरस्तरंगयति च प्रेंखोलितांभोरुहः
सोयं मामुपलभ्य किं न कुरुते लब्धास्पदं चेद्गुशाम् ॥१७॥

विदूषकः–अहो दुव्वहो मंमहो ।

रामः–( मदनावस्थां नाटयन् )

प्रियसख न शृणोषि त्वं किमेतानि शीघ्रं
श्रवणयुगमिदं मे गाढगाढं पिधेहि ।
इह खलु सहकारोद्यानभूमौ वसंतान्
मदकलकलकंठी कंठनिष्कूजितानि ॥ १८ ॥

विदूषकः—वैअस्स सव्वदो कूजंतेसु कोइलेसु केतिअं वा कालं पिहिअंति कण्णा ।

रामः—यावज्जीवितं रक्षितव्यं ।

विदूषकः—अहं तेयस्थ उवाअं उवादिसिस्सं ।

रामः—किं सीतादर्शनोपायम् ।

विदूषकः—णंहि णहि कोइलकूजिअसद्दादिवाहणुम्बाअं ।

रामः—कथमिव ।

---

१ वयस्य इत एवोपविशावः । २ अहो दुर्वहो मन्मथः । ३ वयस्य सर्वतः कूजत्सु कोकिलेषु कियंतं वा कालं पिधीयेते कर्णौ । ४ अहं तत्रैवोपायमुपदिशामि । ५ नहि नहि कोकिलकूजितशब्दातिवाहनोपायं ।

विदूषकः—वअस्स सवणादो अण्णं इत्थीअं णएहि मणं जत्थ हु मणं पअट्टिअं अक्खं वि सअं गहणादि ।

रामः—यथाह भवान् ( परितो विलोकयन् सोद्वेगं ) वयस्य न तदपि सा स्थित्यै । पश्य ।

कलुषयति विकीर्णः कौसुमोऽयं परागो
नयनयुगमिदं मे पश्यतो दृश्यमानः ।
तिरयति विचलंती मंजरी पल्लवानां
मदयति मधुवर्षी मन्मथं चैष चूतः ॥ १९ ॥

तदेतद्भवतोपि प्रतीकारचिंतामतिवर्तते । अथवा ।

एता नूतनचूतकोरकशिखास्ताः कृंत निस्तंद्रितो
येन स्यान्मलयानिलस्य सुमहान् सौभाग्यदर्पो हृतः ।
सद्यो मुद्रितकुंचिका च मदनज्या शृंगमाला भवेत्
क्षम्यः सोपि निरायुधश्च भवति प्रायेण पुष्पायुधः ॥ २० ॥

अथवा मास्म तथा कृथाः येन मे प्रियाकर्णावतंसौचित्येन सहकारमंजरीषु सानुरागं मनः ।

विदूषकः—( सस्मितं ) अण्णहा हि मए किल एदाओ कुदो विदण्णा ।[2]

रामः—वयस्य किमत्र कर्तव्यं ।

विदूषकः—धीरावलंबणं ।[3]

रामः—वयस्य ।

अवधीरितधैर्योऽहमधीराक्ष्या कृतस्तया ।
धैर्यशब्दार्थबोधोपि दूरे क्वास्यावलंबनम् ॥ २१ ॥

विदूषकः—किं कादव्वदो दूसो चिट्ठ ।[4]

१ वयस्य श्रवणादन्यां स्त्रियं नय मनः यत्र खलु मनः प्रवर्तितं अक्षमपि स्वयं गृह्णाति । २ अन्यथा हि मया किलैताः कुतो विदीर्णाः । ३ धैर्यावलंबनं । ४ किंकर्तव्यता दूष्यः तिष्ट ।

रामः—( सोपहासं ) साधूपदिष्टमौपयिकं ।

विदूषकः—[1]ऐत्तिअं मे उपाअपरिण्णाणवैहवं ।

रामः—( मदनावस्थां नाटयन् )

रचय कुसुमैः शय्यां स्वैरं विवेष्टनदायिनीं
सरसकदलीपत्रभ्रांतानिलैरुपवीजय ।
सबिसवलयान्मुक्ताहारान्मुहुर्मुहुरर्पयन्
गुरुतरममुं संतापं मे वयस्य लघूकुरु ॥ २२ ॥

विदूषकः—[2]वँअस्स एदं खु चूदविडपारूढाए माहविलदाए मलआणिलसंचालणपडिअकुसुमोक्करपवड्डिअपुप्फतप्पं मणिकुट्टिमं एदे अ सिसिरोवआरत्थं आमुक्का पूव्वं चेव तुह मोत्ताहारा । दाणिं पुण पदुमिणीदो मुणालायि कअलीघरादो कअलीदलाई जाव आणेमि ( निष्क्रम्य प्रविश्योपसृत्य च ) [3]अम्मो एदे कअलीपत्तणिहित्तआ मुणाला सुमरावेंति मं भोअणं ।

रामः—वयस्य साध्वानीतं यावच्छिशिरोपचारे प्रवर्तस्व ।

विदूषकः—[4]जं वअस्सो आणवेदि । ( तथा करोति )

रामः—( सोद्वेगं ) कृतं कृतमनेन ।

समंतादंगं मे शयनकुसुमैस्तुद्यत इतः
परं चैतच्चेतश्चलति कदलीपत्रमरुता ।
पतंतीतः स्रोपाद्विशिथिलगुणा मौक्तिकगुणाः
विसैःसार्धं वक्षः क्कथति मम गाढव्यथमितः ॥ २३ ॥

---

१ एतावन्मे उपायपरिज्ञानवैभवं । २ वयस्य एतत् खलु चूतविटपारूढायाः माधवीलतायाः मलयानिलसंचालनपतितकुसुमोत्करप्रवर्तितपुष्पतल्पं मणिकुट्टिममेते च शिशिरोपचारार्थमामुक्ताः पूर्वमेव तव मुक्ताहाराः । इदानीं पुनः पद्मिन्याः मृणालानि कदलीगृहात् कदलीदलानि यावदानयामि । ३ अहो एते कदलीपत्रनिहिता मृणाला स्मारयंति मां भोजनं । ४ यद्वयस्य आज्ञापयति ।

विदूषक —ऐसो खु सो सतिकम्मणि मूडुप्पादो येण सिसिरोवआरो व्व सतापुत्थिए हेदू ।

राम —वयस्य यत्सत्यमसौ शिशिरोपचार' शिरोपचारस्तेन मे शिरोवेदनामापादयति । तथाहि ।

ऊष्मनिष्पादने सोष्मा स्वैरमंगेष्वसौ मम ।
शैत्यापादनकृत्ये तु शीतला शीतलक्रिया ॥ २४ ॥

विदूषकः—सव्वं कअ सिसिरकम्म ज जं मए जाणेअदि कि दाणि करिस्स ।

रामः—

किं किं तु शिशिरक्रियाव्यतिकरैरायासयस्यघनः
क्षोण्यां रूपय पुष्पतल्परचनां रमादल पारय ।
छित्वा विक्षिप दिक्षु मक्षु चुडुकैराच्छिद्य मुक्तागुणान्
हस्ताभ्यां चमदाननिर्दयमनाः मुग्धा मृणालीलताः ॥२५॥

विदूषक —साहु णियुत्त सिसिरकम्म वअस्स एआरिसपि सिसिरकम्म ण दे सिसिरोवआरबुद्धिं जणेअत्ति अज्ञाहिद ।

रामः— ( किंचिदात्मानमवस्थाप्य )

क्व विषयेषु विवेकसहं मनः
स्मृतिविमोहजडाः क्व च कामिनः ।
वदसि मह्यमनात्मवते कथं
कथय तुभ्यमविप्लुतचेतसे ॥ २६ ॥

विदूषकः—वअस्स कि अण्णं सिसिरकम्मं करिस्स ।

---

१ एष खलु स शांतिकर्मणि भूतोत्पात येन शिशिरोपचारयेव सतापोत्पत्त्यै हेतु । २ सर्वे कृतं शिशिरकर्म यद्यद् मया ज्ञायते किमिदानीं करिष्ये । ३ साधु- नियुक्त शिशिरकर्म वयस्यैतादृशमपि शिशिरकर्म न ते शिशिरोपचारबुद्धिं जन- यतीत्यत्याहितं । ४ वयस्य किमन्यच्छिशिरकर्म करिष्ये ।

रामः—किं मां पुनः पुनः प्रजल्पैरुत्पीडयसि क इव जानाति शिशिरोपचारमितरच्च ।

विदूषकः—वैअस्स एसा दाणिं पच्चाअआ एक्का दे अंतःकरणपउट्टि जाणइत्ति कहेमि ।

रामः—( सहर्ष ) कासाविका ममान्तकप्रवृत्तिः जानकी । ( उत्थातुमिच्छति ) ।

विदूषकः—वैअस्स एव्वं सु मए उदीरिअं एसा दे पच्चागआ एक्का जाणइ सिसिरोवआरं अंतःकरणपउट्टित्ति ।

रामः—कथमन्यथा चिंतितं अन्यथा परिणतं । वयस्य ।

याता मम तन्मयतामंतःकरणप्रवृत्तिरपि दूरे ।
प्रत्यागमिष्यति तु सा प्रत्यागच्छेत्प्रिया यदि सा ॥ २७ ॥

( ततः प्रविशति सोत्कंठं सीता विनीता च )

सीता—पिअसहि विणीदे कहिं एसा मे सीसवेअणा उवसमिस्सिदि ।

विनीता—अत्थ सो दिस्सइ ।

सीता—को ।

विनीता—जो दे इमाए हेदू ।

सीता—किं एसो मे अंगसंतावो ।

विनीता—जो तस्सवि हेदू

सीता—को वा तस्य हेदू

विनीता—जो तुए बद्धंजलिए अब्भत्थिओ ।

---

१ वयस्यैषा इदानीं प्रत्यागतैका ते अंतःकरणप्रवृत्तिं जानातीति कथयामि । २ वयस्य एवं खलु मयोदीरितेयमेषा ते प्रत्यागता एका जानाति शिशिरोपचारमंतःकरणप्रवृत्तिरिति । ३ प्रियसखि विनीते कस्मिन्नेषा मे शीर्षवेदनोपशमिष्यति । ४ यत्र स दृश्यते । ५ कः । ६ यस्ते अस्याः हेतुः । ७ किमेष मेऽङ्गसंतापः । ८ यस्तस्यापि हेतुः । ९ को वा तस्य हेतुः । १० यस्त्वया बद्धांजल्याभ्यर्थितः ।

सीता—को वा अप्पणो सन्तावहेउ अब्भत्थेइ

विनीता—सोक्खहेउत्ति खु पत्थिओ सतावहेदू जादो ।

सीता—जइ सतापहेदू जादो कह कीरिसो अज्ज सीसवेअण अवण-इस्सिदि ।

विनीता—अदिट्ठो खु सदावहेदू दिट्ठो उण सो सोक्खाअ महिए विअ पाउससमओ ।

सीता—तहवि तुए चेअ खु सो तदा अब्भत्थिओ ण उण मए ।

विनीता—बहिरगापराद्धा अ सा मे वाआमेत्तेण पत्थणा तुए उण अतरगा अन्नत्था अ पत्थणा किदा ।

सीता—सहि कामदेवोत्ति खु मए अजलिबद्धो पत्थणा अ किदा ।

विनीता—होदु काम कामो एत्थ ववदेसो णिग्गच्छत्तिए उण दे वेव-माआण ऊरुत्थम्भाण । कि भणासि ।

सीता—कि सो अपुव्वजणदसणसज्झसो ण हवे ।

विनीता—साहु कप्पिओ एत्थ वाओ।

सीता—किं अदो वर ।

विनीता—अणुरत्तविच्चिम्हण ते लोआण कि पडिवज्जह ।

---

१ को वात्मन सन्तापहेतुमभ्यर्थयते । २ सौख्यहेतुरिति खलु प्रार्थित सता-पहेतुर्जात । ३ यदि सतापहेतुर्जात कथ कीदृशोऽद्य शीर्षवेदनामपनयिष्यति । ४ अदृष्ट खलु सतापहेतु दृष्ट पुन सौख्याय मह्या इव प्रावृट्समय । ५ तथापि त्वयैव खलु स तदाभ्यर्थित न पुनर्मया । ६ बहिरगापराद्धा च सा मे वाचामा-त्रेण प्रार्थना त्वया पुनरतरगा आत्मार्था च प्रार्थना कृता । ७ सखि कामदेव इति खलु मयाजलिबद्धा प्रार्थना च कृता । ८ भवतु काम कामोत्र व्यपदेश निर्ग-च्छत्या पुनस्ते वेपमानयोरूरुस्तम्भयो कि भणसि । ९ कि सोऽपूर्वजनदर्शनसाध्वसो न भवेत् । १० साधु कल्पितोऽत्र वाद् । ११ किमतो वर । १२ अनुरक्तविजि-म्भितनयोर्लोचनयो किं प्रतिपद्यते ।

सीता—दोलारोहणकिलंताए आकेअराइ णं मे लोअणाइ।

विनीता—तंहवि मए उण णिग्गमणाणुरुद्धाए अंजलिणा सह विमुक्कधीराए मंमुहपाडिआणं मंमहपीडिआणं णिग्गमिदुं अणिच्छंतीणं दिट्ठिणं भावो कहं णिगूहिज्जहि।

सीता—संहि अणुत्तरम्हि संउत्ता।

विनीता—उंरा तुमं अणुत्तरा अत्थि खु अदो उत्तरं ते पिअसमाअमणं।

सीता—ऍवं खु सहिअणो मं चिंतेदि मंतेदि अ।

विनीता—अंणुभविस्सदि अ।

सीता—( आत्मगतं ) कुंदो मे सा सुजंमवता ( प्रकाशं ) संहि तह होदु।

विनीता—जइ मे दिट्ठिण भाअदेआ।

सीता—हलो चिट्ठदु एदं कहिं दाव गदुअ एदं संदावं अवणेमो।

विनीता—पैच्चग्गमहुलच्छिमहुरं माहविवणं गच्छम्म ता इदो भट्टिदारिआ।

( उभे परिक्रामतः )

सीता—( सखेदं ) हेला केत्तिअं वा गंतव्वं।

विनीता—ईणं आरामं गच्छेम्मो।

---

१ दोलारोहणक्लान्ताया आकेकरे ननु मे लोचने। २ तथापि मया पुनः निर्गमनाद्धयाजस्या सह विमुक्तधैर्यया मन्मुखपातितयोर्मन्मथपीडितयोर्निर्गन्तुमनिच्छन्त्योर्दृष्टयोर्भावो कथं निगूह्यते ३ सखि अनुत्तरास्मि संवृत्ता। ४ पुरा त्वं अनुत्तरा असि खल्वतः उत्तरं ते प्रियसमागमनं। ५ एवं खलु सखीजनो मां चिंतयते मंत्रयते च। ६ अनुमनिष्यति च। ७ कुतो मे सा सुजन्मवता। ८ सखि तथा भवतु। ९ यदि मे दृष्टयोभागधेयः। १० सखि तिष्ठतु एतत् कस्मिन्नावदस्वैतं संतापमपनेष्यामः। ११ प्रत्यग्रमधुलक्ष्मीमधुरं माधविवनं गच्छामः तस्मादितो भर्तृदारिके। १२ सखि कियद्वा गंतव्यं। १३ एनमारामं गच्छामः।

सीता—केहिं खु सो रामो ।

विनीता—भट्टिदारिए णं आरामो अम्हेहिं गच्छिअदिति खु मए भणिअं ।

सीता—( सविलक्ष्यस्मितं ) हैला केइ खु दूरे सो आरामो ।

विनीता—( पुरो निर्दिश्य ) एअं खु तं माहविवणं जाव पविसह्म ।

सीता—तह ।

( उभे प्रविशतः )

हैला अविण्णादहिअअं तं जणं उक्कंठंती तहवि अहं हिरअमि मुहं देउं।

विनीता—भट्टिदारिए मा तह चिंतिअ तह णाम तुह अणुरत्तदिट्ठि-णिहाअणं खु सो सव्वहा उक्कंट्ठिओ भवे ।

सीता—हला अओज्झाउरि एसो जणो ण खु इदो तस्य सट्ठिदी अवट्ठिदा ।

विनीता—तहवि तुमं दट्ठू सो अपुण्णमणोरहो एअं देसं ण मुंचइ ।

विदूषकः—वअस्स केत्तिअं वा कालं पडिवालेमि जस्सिं दे एसो संदावो समं णीआदि ।

रामः—वयस्य एप मे निर्णयः ।

---

१ कस्मिन् खलु स रामः । २ भर्तृदारिके नन्वारामः आवाभ्यां गम्यतामिति खलुमया भणितं । ३ सखि कियति खलु दूरे स आरामः । ४ एतत्खलु तन्माधविवनं यावत्प्रविशामः । ५ तथा । ६ सखि अविज्ञातहृदयं तं जनमुत्कंठमाना तथापि अहं जिहेमि मुखं दर्शयितुं । ७ भर्तृदारिके मा तथा चिंतयित्वा तदा नाम त्वय्यनुरक्तदृष्टिनिधापनं खलु स सर्वथा उत्कंठितो भवेत् । ८ सखि अयोध्यापुर्यां स जनः न खलु इतस्तस्य संस्थितिरवस्थिता । ९ तथापि त्वां दृष्ट्वा सोऽपूर्णमनोरथ एतद्देशं न मुंचति । १० वयस्य कियद्वा कालं प्रतिपालयामि यस्मिन् ते एप संतापः शमं नीयते ।

शीतांशुवदनां सीतां स्पृष्ट्वैव स्पर्शशीतलाम् ।
अपास्ततापमंगं मे शीतिभावमवाप्स्यति ॥ २८ ॥

**विनीता**—(कर्णं दत्वा) भट्टिदारिए इदो जणालावो विअ सुणिअदि।

**सीता**—सहि इमिणा माहविगुम्मेणंतरिदो दक्खम्म ।

**विनीता**—( तथा कृत्वा दृष्ट्वा च ) भट्टदारिए दिट्ठिआ वड्डसि एसो दे हिअअवल्लहो ।

**सीता**—( दृष्ट्वा सहर्षं सानुरागं चात्मगतं ) हिअअ पडिअवट्ठावइ अप्पाणं किअत्थं खु दाणिं दे जम्मं ( साकारा संवरणं ) किं णु दाणिं एदं दक्खंतिए किंपि वेपइ मे हिअअं ऊरुजुगळं च फुरइ वामच्छि अहरो अ सिथिली होइ णीविगंथि धीरं च किलम्मइ मणो सरीरं च ।

**विनीता**—जइ एव्वं भट्टदारिए इमस्स वि जणस्स विवित्तदेसे कोवि सेरालाओ वट्टइ तं सुणिस्सह्म ।

**सीता**—जहं पिअसहीए रोआदि ।

**विनीता**—( विलोक्य ) भट्टदारिए पेक्ख्स परिदो सिसिरोवआरपरिअरं ।

**सीता**—किं तेण मे ।

**विनीता**—भट्टदारिए तुए उक्कट्ठाए संदाविओ खु सो ।

**सीता**—कैहं अज्झवरिसासि ।

---

१ भर्तृदारिके इतो जनालाप इव श्रूयते । २ सखि अमुना माधवीगुल्मेनांतरिते पश्यावः । ३ भर्तृदारिके दिष्ट्या वर्धसे एष ते हृदयवल्लभः । ४ हृदय पर्यवस्थापय आत्मानं कृतार्थं खल्विदानीं ते जन्म । ५ किं नु इदानीमेतं पश्यंत्याः किमपि वेपते मे हृदयमूरुयुगलं च स्फुरति वामाक्षि अधरश्च, शिथिली भवति नीविग्रंथिः धैर्यं च, क्लाम्यति मनः शरीरं च, । ६ यद्येवं भर्तृदारिके अस्यापि जनस्य विविक्ते देशे कोपि स्वैरालापो वर्तते तं श्रोष्यावः । ७ यथा प्रियसख्यै रोचते । ८ भर्तृदारिके पश्य परितः शिशिरोपचारपरिकरं । ९ किं तेन मे । १० भर्तृदारिके त्वदुत्कंठया संतापितः खलु सः । ११ कथमध्यवस्यासि ।

**विनीता**—जंइ मं ण पत्तिआआसि दाणिं चेअ एअं सेरालावं सुणिस्ससि ।

**विदूषकः**—वंअस्स एअ अच्चाहिदं तुवंपि णाम ओहत्थिअसव्वसेअवत्थुओ संतावावणोदत्थं एक्कं सीअं मण्णोसित्ति ।

**रामः**—( सनिर्वेदं तूष्णीमास्ते )

**विनीता**—अंसंपडिपत्तिए किं दाणिं तुस्सिसि ।

**सीता**—हला एक्कं सीअं वत्थु आत्थित्ति सु मणिअं ।

**विनीता**—हंत असंतुट्ठि ।

**विदूषकः**—वंअस्स अवहित्तेण अ सीआं पजम्पंतेण तुए कुदो दाणिं वाहित्तेण सीआपसंगे ण दीअदि पच्चुत्ति ।

**रामः**—किं तया ।

**सीता**—( श्रुत्वा सखेदमात्मगतं ) किं तए इति मे विहत्थेइ गआ मे मणोरहा ।

**विनीता**—( श्रुत्वात्मगतं ) कहं एस अण्णहिअओ संउत्तो ।

**सीता**—हंजे किं दाणिं एत्थ ठीअदि दा गच्छम्म ।

**विनीता**—भट्टदारिए मा तुमं तुवरेहि पुणोवि एअं आलावं [illegible] ।

**सीता**—उंम्मत्तिए किं अदो वरंपि सुणिआदि ।

---

१ यदि मां प्रत्यापयसीदानीमेवैतं स्वैरालापं श्रोष्यसि । २ [illegible] त्वमपि नामापहस्तितसर्वशीतवस्तुकः संतापापनोदार्थमेकां [illegible] इति । ३ असंप्रतिपत्त्याः किमिदानीं तुष्यसि । सखि एकं [illegible] । ४ हंतासंतुष्टिः । ५ वयस्य अव्याहृतेन च सीतां [illegible] इदानीं व्याहृतेन सीताप्रसंगे न दीयते प्रत्युक्तिः । ६ [illegible] गता मे मनोरथाः । ७ कथमेषो अन्यहृदयः संवृत्तः । ८ [illegible] तावदच्छावः । ९ भर्तृदारिके मा त्वं त्वरस्व [illegible] । १० [illegible] तिके किं अतः परोपि श्रूयते ।

विनीता—( आत्मगतं )[1] केहं अतिमेत्तं विसण्णा भट्टिदारिआ ।

सीता—( सनिर्वेदं )[2] हला एहि गच्छम्ह अहव कहिं मए गच्छिअदि ( इति मुह्यति )

विनीता—( ससंभ्रमं )[3] समस्सिसिहि भट्टिदारिए समस्ससिहि ।

रामः—( कर्णं दत्वा ) कथं स्त्रीजनसमाश्वासनशब्दः ( उत्थाय ससंभ्रममुपसर्पति )

विदूषकः—( श्रुत्वा ससंभ्रमं )[4] अविहा अविहा किं एदं ( उपश्रुत्य दृष्ट्वा च )[5] वअस्स एसा दे पाणवल्लहा ।

रामः—(दृष्ट्वा) कथं सीता (उपसृत्य) प्रिये समाश्वसिहि समाश्वसिहि।

सीता—( शनैश्शनैः समाश्वसिति ) ।

रामः—( निर्वर्ण्य )—

*उन्मील्य नेत्रे मदनेन सार्ध-*
मपांगशारीकृतकर्णपूरे ।
समाश्वसित्याननमायत्याक्ष्याः
समुच्छ्वसत्पंकजकोशकांतिः ॥ २९ ॥

किं च ।

नयनयुगसितमध्यं
सितपर्यंतं विभाति शबलाक्ष्याः ।
शितधारमंतरत्तक-
ज्यैत्रं मदनस्य यन्त्रमिव ॥ ३० ॥

सीता—( समाश्वास्य रामं दृष्ट्वा सरोषं मुखं परावर्तयति । )

---

१ कथमतिमात्र विषण्णा भर्तृदारिका । २ सखि एहि गच्छावोऽथवा कस्मिन् मया गम्यते । ३ समाश्वसिहि भर्तृदारिके समाश्वसिहि । ४ अविद अविद किमेतत् । ५ वयस्य एषा ते प्राणवल्लभा ।

रामः—

इदं दरस्फुरदधरोष्ठपल्लवं
भ्रुवौ समुन्नमयदनर्घ्यविभ्रमम् ।
मुखं रुषा कलुषविजिह्मलोचनं
कुतस्त्वया सुमुखि पराङ्मुखीकृतम् ॥ ३१ ॥

सीता—( गन्तुमिच्छति ) ।

विदूषकः—को दाणिं अदिक्कमो को एसो विओओ ।

राम —( हस्तेन गृहीत्वा ) प्रिये क एष संरम्भः ( सानुनय )

कृतापराधः किमु दौर्विदग्ध्या-
दयं जनो दासजनादभिन्नः ।
यद्गन्तुकामासि समाश्वसन्त्यौ
ममाद्य बिम्बोष्ठि मनोरथेभ्यः ॥ ३२ ॥

विदूषक—(विनीता प्रति) होदि[2] किं णु खु तत्तहोदिए कोवकारणं ।

विनीता—सीअविसअं पच्चुत्तिं कुदो ण देस्सिसित्ति तुए भणिदे कि दाए इत्ति भणिअ सुणिअ अप्पाणं विहत्थिअ जाणत्ती किल एसा णिव्विण्णा ।

राम —(सस्मित) कथं मयैवापराद्धं ( सीता प्रति ) अयि मुग्धे कि तया दुरापफलोपलिप्सया दुर्ललितया प्रत्युक्त्येति खलु मया कथितं ।

विदूषक—( सहासं ) अम्हो अकालकोपणा अकारणकोपणा अ अत्तहोदी ।

सीता—( आत्मगत ) कहं अण्णहा मए कहिअ ।

१ क इदानीमतिक्रम क एष वियोग । २ भवति किं नु खलु तत्रभवत्या कोपकारणं । ३ सीताविषयां प्रत्युक्तिं कुतो न दास्यसीति त्वया भणिते किं तयेति भणितं श्रुत्वात्मानं विहस्तितं जानती किलैषा निर्विण्णा । ४ अहो अकालकोपना अकारणकोपना चात्रभवती । ५ कथमन्यथा मया कथितं ।

विनीता—कहं अण्णहा गहीअं अम्हेहिं ।

रामः—किंच ।

वचो यद्यपि निर्गच्छेन्मुग्धे स्वेच्छतरं मुखात् ।
रामो बहिश्चरान् प्राणान् कथं हित्वा विहस्तयेत् ॥ ३३ ॥

अथवा सुमहदनेनोपकृतमकाण्डकोपकारिणा मौढ्येन । कुतः ।

प्रणयादपि मानिन्या मानग्रह एव रोचते मह्यम् ।
ईर्ष्यायितमधुराणां येनाधिगमः कटाक्षाणाम् ॥ ३४ ॥

( नेपथ्ये )

अये प्राप्तः प्रदोषारंभः ।

यातो वासर एष शोषितजरत्कासारगर्तोदको
मार्तंडस्य करैरकुंठितशिखैः सार्कं करीषंकषैः ।
ये प्रातः प्रबलायिताः प्रतिदिशं प्रत्यागताः पत्रिण-
स्ते कांतासहिता विशंति निलयान् प्राप्तः प्रदोषोत्सवः ॥ ३५ ॥

रामः—( श्रुत्वा सखेदं ) इदं पुनर्मिथुनं प्रविघटते ।

विनीता—कहं उण वणपालआणं उग्घोसो भट्टिदारिए इदो गच्छम्ह ।

सीता—( आत्मगतं ) केवलं सरीरमेत्तेण ।

विनीता—इदो इदो भट्टदारिए ।

( परिक्रम्य निष्क्रांता सीता विनीता च )

रामः—( सौत्सुक्यं ) कथमसौ न मुद्रयति कदाचिद्भीप्सितफलाव-लेहिनोपि संकल्पयोनिः संकल्पान् । तथाहि—

दृष्टैव सीता ननु दर्शनीया
स्पृष्टेव सा स्पर्शसुशीतलांगी ।

१ कथमन्यथा गृहीतमावाभ्यां । २ निरातुर्यात् । ३ कथं पुनः वनपालकाना-मुद्घोषो भर्तृदारिके इतो गच्छावः । ४ केवलं शरीरमात्रेण । ५ इत इतो भर्तृदारिके ।

तथाप्यमीषां नु मनोरथानां
न शांतिरेषापि परं ममैव ॥ ३६ ॥

विदूषकः—वैअस्स अदिक्कामदि संज्झा । अज्ज हि दिअहसिरिविरह-सेदविप्पमुक्कवहो चंदपादाभिघादभीदो विअ अवरं चेअ आसं अवलंवेदि पउड्ढाणुराओ दिअहणाहो ता एहि गच्छम्ह ।

राम.–( विलोक्य ) कथमिदानीमस्ताचलशिखरिशेखरश्रियं विडंबयति लंबमानो भगवान् गभस्तिमाली । ( स्पर्शं रूपयित्वा )

उन्मीलन्नवमालिकांतरगलत्सौरभ्यसंवासिताः
श्रांताया दिवसश्रियो हिमकणैर्घर्माम्बुकल्पैर्जडाः ।
पेयाघ्राणघटैः सुखेन नितरामालिंगनीया भुजै-
र्निश्वासा इव यांति मंदमधुना वाता वसंतश्रियः ॥ ३७ ॥

विदूषकः—इदो इदो पिअवअस्सो ।

( परिक्रम्य निष्क्रांतौ )

इति श्रीभट्टगोविंद स्वामिन सूनुना हस्तिमल्लेन विरचिते
मैथिलीकल्याण नाम्नि नाटके द्वितीयोऽङ्क ॥ २ ॥

---

१ वयस्य अतिक्रामति संध्या । अद्य हि दिवसश्रीविरहखेदविप्रमुक्तप्रभ चंद्रपादाभिघातभीत इवापरामेवाशामवलम्बते प्रवृद्धानुरागो दिवसनाथः । तस्मादेहि गच्छाव । २ इत इत प्रियवयस्य ।

## तृतीयोऽङ्कः ॥ ३ ॥



( ततः प्रविशति वामनः )

**वामनः**—शोभणं खु लोईआ भणंति णत्थि स सुज्जे वासले पईवस्स अवसलेत्ति जेण दाणिं सोहगवक्खजालंतलपविट्ठे पमिट्ठक्ककंतसिलत्थलणिवडणपडिफलणदिउणपआसिअवासघलोदले पज्जलंतलअणकुट्टिमुट्ठिअकंचणसलाआसहस्सपडिहे दच्छिदिसिपसले तिमिलोम्मूलणकुसले पसलंते बालाअवे अहगे मोहलअणप्पईवगहेण महालाअस्स पस्सादो पलिसमाविअझिवासमए दिअसमुहम्मि णिग्गए । ( परिक्रामन् श्रमं नाटयित्वा ) किलंतोम्ह उण्हच्छासेण कुत्थ उण हि विस्समिस्सं ( विचिंत्य ) होदु घलं चेअ गच्छेमि । केण खु ए मे गमणसहाअलाहो भविस्सदि ।

( ततः प्रविशति कुब्जः )

**कुब्जः**—अम्ह पच्चूसविअसंतघलद्दिग्घिआसलोलुहमउलोदलगलिअबहुलमअलंदलसोहिए पविट्ठलोसाअजलल्लवजडीकए अइमत्तसीअलिकिअमोत्ताहलजालए अणब्भात्थिअतालउंताणिले मंदाणिले वाअंदे णिवासंते

---

१ शोभनं खलु लौकिका भणंति नास्ति स सूर्ये वासरे प्रदीपस्यावसर इति येनेदानीं सौधगवाक्षजालांतरप्रविष्टे प्रमृष्टार्ककांतशिलातलनिपतनप्रतिफलनाद्द्विगुणप्रकाशितवासगृहोदरे प्रज्वलद्रत्नकुट्टिमोत्थितकांचनशलाकासहस्रप्रतिमे दक्षदिक्प्रसरे तिमिरोन्मूलनकुशले प्रसरति बालातपे अहमपि मोघरत्नप्रदीपग्रहेण महाराजस्य पाश्चात्यपरिमिताधिनिवासमयदिवसमुखे निर्गतः । २ क्लान्तोस्मि उष्णोच्छ्वासेन कुत्र पुनर्हि विश्रमिष्ये । ३ भवतु गृहमेव गच्छामि केन खल्विदानीं मे गमनसंचारलाभो भविष्यति । ४ अद्य प्रत्यूषविकसंतगृहदीर्घिकासरोरुहमुकुलोदरगलितबहुलमकरंदरसार्द्रिते प्रविरलावश्यायजललवजडीकृतेतिमात्रशीतलीकृतमुक्ताफलजालके अनभ्यर्थिततालवृंतानिले मंदानिले वाति निवासांतेऽहमपि स्वल्पविश्रामावसरः विशुष्कमद्यूतेमदन. निर्गतो महाराजस्य पार्श्वात् तस्मादिदानीमाम्लनः गृहं गच्छामि ।

अहगोवि उन्द्धविस्समावसले विमुक्कतालउंतगहणे णिग्गए महालाअस्स पस्सदो ता दाणि अप्पणो घलं गच्छेमि ( परिकामति )।

**वामनः**—( दृष्ट्वा ) अम्हो तालउंतगाही पिअसहो दासेलए जाव एअं सद्दावेमि । लेले दासेलअ ।

**कुब्जः**—( आकर्ण्य दृष्ट्वा च ) अम्हो लअणदीवगाहि पिअसहे उलब्भए ( उपसर्पति )

**वामनः**—( निर्वर्ण्य ) अले पिअवअस्सा दासेलआ तुम्हे विरूव्वआ खु ओहसणिज्जा ।

**कुब्जः**—तहँ हि ।

हिंडंति कलभा विअ एत्थ ण सअणं लहेति उत्ताणं ।
ओऊहणं लइह्मिअ णिलंतलं वक्कहिअआओ ॥ १ ॥

( सहासं) अले उलंभआ कलभगमणं खु उत्तमाणं पुलिसाणं गमणंति पसस्सिअदि ।

**वामनः**—( सहासं ) सिलीसिदे अहिलासो जं अण्णहा भणिअंपि अण्णहा वक्खाणेसि मए खु कलह एत्ति सिंखल एव्व भणिएज्जे ण उण विक्के अदो येव्वं खु णं दासेलए त्ति तुवं अंत्तेउले सद्दाविअसि ।

**कुब्जः**—( सहासं सेर्ष्यं ) अले किं तुवं अप्पह्मि अंधेसि तुह्मेहिं खु वामणेहिं ।

---

१ अहो तालवृंतग्राही प्रियसखा दासेरकः यावदेतं शब्दापयामि । रे रे दासेरक २ अहो रत्नदीपग्राही प्रियसखा सरभकः । ३ अरे प्रियवयस्या दासेरका यूयं विरूपका खलु उपहसनीयाः । ४. तथाहि । गच्छंति करभा इवात्र न शयनं लभन्त उत्तानं । उपगूहनं रतौ च निरंतरं वक्रहृदयकाः । ५ अरे उरभ्रक करभगमनं स्वच्छतमानां पुरुषाणां गमनमिति प्रशस्यते । ६ श्लेषितेऽभिलापः यस्मात् अन्यथा भणितमपि अन्यथा व्याख्यासि मयखलु कलभ इति शृंखल एव भणितं न पुनर्विकं, अत एव खलु ननु दासेरक इति त्वमंतः पुरे शब्दापयसि । ७ अरे किं त्वमात्मन्यंधोसि युष्माभिः खलु वामनैः ।

आसणसलिलसठिईहिं अत्थिअद्दो उत्थिअं पदंतेहिं ।
चडुलणिउञ्जंगेहिं गच्छियदि कच्छवेहि विअ ॥ २ ॥

वामनः—( सहासं ) हिमाणए हुद्दु कए उवालंभस्स पलिउवालंभे पिअसहा म हु मज्झं असूहेइ जाव दाणिं अहगे तुझे पसंसेवि सुणाह दाव ।

पावंति लइम्मि दासिआओ
दिट्टपलिलद्धमउआलपुण्णआओ ।
हिअअं वि सहावउण्णअंतं
सुमहंतं ण खु अत्थि अण्णआणं ॥ ३ ॥

कुब्जः—( सहासं ) सोहु पसंसिअं पिअसह तेण हिं अहंपि तुझे पसंसिस्सं होमि ।

देहाहिअउड्ढपिंडिआ
णिहुवणचुंबिअणाहिक्कविआ ।
अंसेसु कअग्गहत्थए
उवऊहंति खु कोढ्ढिणीअणं ॥ ४ ॥

वामनः—( सहासं ) सोहु पसंसिअं ।

उभौ—( सहासं ) अले सुसंगदं खु एअं णिउञ्जं ।

कुब्जः—( उवहसेदि पसंसेदि अ कुज्जं णिउञ्जोनि । )

वामनः—अले दक्ख दाव अम्हाहिसस्स लाअसडिवालस्स ।

---

१ आसनसलिलस्थितिभिरर्धत उत्थितं पदान्तैः चटुलनिकुञ्जाङ्गैः गम्यन्ते कच्छपैरिव।
२ अहो मुग्ध कृतमुपालंभस्य प्रत्युपालंभः प्रियसखे मा खलु मत्सरमुद्वह याव-
दिदानीं महं युष्मान् प्रशंसे । शृणु तावत् । प्राप्नुवंति रतौ दास्य दृष्टपरिलब्धमधुकर-
पुष्पकाः । हृदयमपि स्वभावोत्पन्नं सुमहत्त्वं न खल्वस्त्यन्येषाम् । ३ साधु प्रशंसितं
प्रियसखे तेन हि अहमपि युष्मान् प्रशंसितं भवामि । देहविदेहपिण्डिका निधुवन-
चुम्बितनाभिरूपिकाः । अंसेषु कचग्रहार्थेनुपगूहंति खलु कुष्ठिनीजनं । ४ साधु
प्रशंसितं । ५ अरे सुसंगतं खलु एतं निकुञ्जं । ६ उपहसति प्रशंसति च कुब्जं
निकुञ्ज इति । ७ अरे पश्य तावदस्माकस्य राजपरिवारस्य ।

कुब्जः—अले विलूवपलिअणा खु वा ईसे सिलाहोंति चेअ पमहगणपलिआलणे इस्सले चेअ ण्णं एत्थ णिद्दस्सणं जह्माअपलिवाले कुज्जो वामणो एला मूआ बब्बला कीलाआ संठेति ।

**वामनः**—अले मा खु अपला हि संति अ संढंपि ओहासेण कलुसेहि । स खु—

**इत्थेहिं पुलिसे विअ खेलदि पुलिसेहि इत्थिआ एव्व ।**
**पुलिसेह्मि पुलिसेयिअ इत्थेहिं इत्थिअं चेय ॥ ५ ॥**

कुब्जः—अले एव्वं एअं लक्खउदाहलणं । किलिवेभट्टिदारिआए मेहिलीए महंतलीआ कलावई । सा खु—

**पअडिचउला कव्वेसु कलासु उत्तला अ सअलासु ।**
**णेत्तविलोभणलूआ अणंगवोत्तम्हि अहिऊआ ॥ ६ ॥**

**वामनः**—( विलोक्य ) अले एसे खु से वलिसधले कलावई इद अभिवट्टइ इमिणा पुणा सह्लावचटलेण संढेण सज्ज विसत्ताणं अह्माणं महंते काले गच्छेइ । ता एहि अह्मो इदो सिग्घं घलं चिअ गच्छेमो ।

कुब्जः—एँवं कलेह्म ।

( उभे परिक्राम्य निष्क्रान्तौ )

---

१ अरे विरूपपरिजनाः खलु वा ईषत् श्लाघंत एव प्रमदगणपरिपालने ईश्वर इव नन्वत्र निदर्शनं यस्मात् राजपरिवारे कुब्जा वामना एडा मूका बर्बरा किरातास्तिष्ठंति । २ अरे मा खलु अपरा हि संति च षंढमपि उपहासेन कलुषय खलु स्त्रीभि पुरुष इव खेलति पुरुषैः स्त्रिय इव पुरुषैः पुरुष इव स्त्रीभिःस्त्रियमिव । ३ अरे एवमेतल्लक्षोदाहरणं क्लीवभर्तृदारिकाया मैथिल्या महत्तरीका कलावती । सा खलु, प्रकृतिचतुरा काव्येषु कलासूत्तरा च सुकलासु नेत्रविलोभनरूपाऽनङ्गदौत्यैरभिरूपा । ४ अरे एषा खलु सा वर्षधरा कलावती इतोऽभिवर्ततेऽनेन पुन सल्लापचतुरेण षंढेन सद्य· विश्रांतयोरावयोर्महान् कालो गच्छति । तस्मात् एहि आवामितः शीघ्रं गृहमेव गच्छाव· । ५ एवं कुर्मः ।

## प्रवेशकः ।

( ततः प्रविशति षंढः )

षंढः— ( यथोचितं परिक्रामन् ) हंत भो विदेहेश्वरदुहितुः परां कोटिमधिरोहति मदनोन्मादः ।

प्रततमखिलाः पश्यत्याशाः न किंचन पश्यति
स्तिमितमसकृत्सा संधत्ते दधाति च वेपथुम् ।
न खलु भजते भद्रां निद्रां न च प्रतिबुध्यते
स्मरति न पुनः किंचित्तं च स्मरत्यधिकस्मरा ॥ ७ ॥

अपि च । व्याजृंभमाणकुमुदकुड्मलकुहरचंक्रमणसंक्रांतसौरभावालिप्तमलयानिलानुलिप्तासु मंडलीकृतशरासनसंधीयमानशरशतोत्क्षेपव्यापृतमन्मथासु कौमुदीविशदासु च क्षणदासु ।

किं चंद्रातपवारणोत्सुकतया किं चंदनार्द्रच्छटा
चर्चापाकरणाय किं शशिशिलानिष्पंदसेकेर्ष्यया ।
कि रंभादलवीजनं व्युदसितुं किं मन्मथं वंदितुं
शातुं वा स्वयमेव हस्तमबलाधिकृच्छ्रमुद्यच्छति ॥ ८ ॥

एवं च मन्ये । "ज्वलतानेन कदाचिन्म्रियता कालिकेन हृदयमिदं । इति किल तत्प्रतिकर्तुं सुश्लिष्टा स्तननटा स्तस्याः" । इत्थं च प्रतिक्षणमुपर्युपरि वर्धमानायामवधीरितप्रतिविधानायां मनसिजरुजायामद्य तु पुनः प्रमदवनमध्यवर्तिनि धारागृहे वर्तमाना सांद्रचंद्नक्षोदचर्चितपल्लवास्तरनिस्सहविधृतशरीरा भर्तृदारिका सीता विहस्तयंतीव सखीजनोपपादितां शिशिरोपचारनियंत्रणां दीर्घमुष्णं च निश्वस्य निर्वेदयंतीव संतापं प्रकाशयंतीवांतर्गतं भावं किमप्युपालंभमानेव प्रार्थयमानेव च मां किंचिदिवोन्नमयंती भ्रूलताग्रभागं पक्ष्माग्रमथितबाष्पजललवलुलितां कातरकातरमाकेकरतारकां साकूतां मन्मुख एव दृष्टिं पातितवती । अहं च गृहीतहृदयतया तत्क्षणमेव कृतं

संदेहेन संपादयामि ते समीहितमित्यवचनमेव प्रेमगर्भेण वीक्षितेन समाश्वास्य सव्याजमुत्थाय कूल्याकारावलंबनेन निरवगमम्। तद्यावदिदानीमवलंबितं रामचंद्रस्यैव पार्श्वं गच्छामि ( परिक्रम्य ) एवं च पुनरवोचदस्मत्कर्णांते भर्तृदारिका हृदयनिर्विशेषा गृहीतभावा विनीता 'पिअसहि कलावई माहविवणे खु णं भट्टिणा रामेण भट्टिदारिआ दिट्ठा ता सोवि पदेसो तुए अण्णेसिदव्वोत्ति मण्णे सोवि तहि चेअ वट्टादि। कुदो।

जत्थ खु पढमं दिण्णो अच्छीण ऊसवो पिअजणेण।
उक्कंठिअं जण पुण सोपि पयेसो विणोदेई ॥ ९ ॥

ता जाव माहविवणं गच्छेमि। ( परिक्रामति अग्रतो विलोक्य ससंभ्रमं ) कहं एक्को विटो मं उवसप्पिअ विहसिअमुहो भणाइ। जहहि।

विटः—अये केयं कन्यका कथं राजकन्यका। भद्रिके श्रूयतां। मुक्ताहारो नाभिं चुंबनमयमपि न कुचकलशयोर्ययोर्लभतेऽन्तर। नालं भारं सोढुं मध्यः सुतनु तनुरपि तव तयोः सकुंकुमपंकयोः तद्यावत्त्वा याचे लीलानिहितपदमनतिमुखरक्कणन्मणिनूपुरं मुक्तायास मंदं मंदं श्रुतिसुभगरणितरशनं प्रयाहि नितंबिनी ( इति सलज्जं असौ स्तनसंन्यस्तहस्ता अपक्रम्य विलोक्य च ) अये अयमग्रतो वेशवाटः। इह हि।

प्रौढांगनारुचिरकंठघनांगरागः
कस्तुरिकापरिमलस्पृहणीयगंधः।
सौभाग्यगर्वरसमंथर एव गत्या
चेतः प्रलोभयति नस्तरुणो नभस्वान् ॥ १० ॥

---

१. प्रियसखी कलावती माधवीवने खलु ननु भर्तृणा रामेण भर्तृदारिका दृष्टा तस्मात्सोपि प्रदेशस्त्वयान्वेष्टव्य इति मन्ये सोपि तस्मिन्नेव वर्तते। कुत। यत्र खलु प्रथमं दत्त अक्ष्णो उत्सव प्रियजनेन उत्कंठितं जन पुन सोपि प्रदेशो विनोदयति। तस्मान्माधविवनं गच्छामि। २ कथमेको विटो मामुपहृस्य विकसित मुखो भण्यते।

( पुरो विलोक्य ) का पुण एसा किंपि संकंती विअ थणंसुओगुंठिआ अ पावं अवहिरिअ इदो अभिवट्टइ ( निरूप्य ) कहं वेसवहूहि रम्मई हला किं तुवे कंति विअ आअच्छसि। किं मणासि हला एत्थ वेसवाडमुहमंडपवट्टिणिं धुत्तगोट्ठिं परिहरिअ अत्ताणं णिग्गहमाणा आअच्छेमित्ति। तेण हि जुज्जइ धुत्ता हु णाम ।

मह्लिंअपुव्वआमवि विस्सद्धं विअ कुणंति चाडूहिं ।
तह तह वि णिवारिता कहवि ण मुंचेदि पत्थेंता ॥ ११ ॥

( सलज्जं ) हंजे एव्वं च अहं वि लज्जेमि तेण पहेण गंतुं ता गच्छ तुमं ( विचिंत्य ) जाव अहंपि इमाए कुसुमायण्णवीहिआए गदुअ माहविवणं पविसेमि ( परिक्रम्य ) एसा कुसुमवणवीहि ( निर्वर्ण्य ) एत्थ हु णिच्चं अआलकुसुमसमूहआहिअउदुगुणा सव्वजणुसुअत्तणकरी वसइ महुसिरि। ( पुनर्निर्वर्ण्य )

तामिह दक्षिणपवनो भृङ्ग परिरमते विकाशयति ।
स्पृशति च जिघ्रति चुंबति पुलकयति त्वयमयमधुना ॥ १२ ॥

( अग्रतो विलोक्य ) कथमसौ स्वोद्वसितालिंदोपांतोपविष्टा नखमुखविपाटितानि सौगंधिककुसुमानि ग्रन्थाति स्मितेनैव समानयति मां वासंतिका। ( उपेत्य ) वासु वासंतिके ।

---

१ का पुनरेषा किमपि संक्रमन्तेव स्तनांशुकावगुंठिता। च पापमवधीर्येतोऽभिवर्तते। २ कथं वेश्यवधूभिः रम्यते सखि किं त्वं क्रान्तेवागच्छसि । किं भणसि। सखि अत्र वेश्यावाटमुखमंडपवर्तिनी धूर्तगोष्ठिं परिहृत्यात्मानं निगृह्णाना आगच्छामि। तेन हि युज्यते धूर्ता खलु नाम। महिलामपूर्वामपि विश्रब्धामिव कुर्वंति चाटुभिः तथा तथापि निवारिता कथमपि न मुंचति प्रार्थयमाना । ३ सखि एवं अहमपि लज्जामि तेन पथेन गंतुं। तस्माद्गच्छ त्वं ४ यावदहमपि अनया कुसुमायणवीथ्या गत्वा माधवीवनं प्रविशामि। ५ एषा खलु कुसुमवनवीथिः। ६ अत्र खलु नित्यमकालकुसुमसमूहमाहितऋतुगुणा सर्वजनोत्सुककरी मधुश्रीः।

क्रीणाति पुष्पाणि युवा त्वया य-
स्सल्लापसौख्येन विलोभ्यमानः ।
पश्यामि तस्माच्च वरं स एव
क्रीणात्ययं त्वां कुसुमोपभागिनम् ॥ १३ ॥

किं ब्रवीषि प्रियसखि सभाव्यतामसौ चिकुरभरसमर्पणेन सौगन्धिकमालेति सकोपं कथमसौ कद्रुदा स्त्रियमिव मां कदर्थयति तत्किमनया । इतो वयं ( परीक्ष्य विलोक्य च ) एतन्माधवीवनद्वारं यावत्प्रविशामि ( प्रविश्य ) अनेन खलु मया भर्तृदारिका द्रष्टव्या खलु विना कालातिपातप्रमादिना न भवितव्यं । कुतः ।

सैषा संप्रति नैव तावदबलाकालातिपातक्षमा
शांतं पापममंगलं प्रतिहतं तापः कथं कथ्यते ।
का वार्ता स्तनभारमध्यपतिते मुग्धे मृणालांकुरे
हारास्तत्क्षणमेव वक्षसि यदा नीलोत्पलश्यामलाः ॥ १४ ॥

अपि च तस्याः खलु ।

किसलयतल्पसमर्पित देहाया मदनदहनतप्तायाः ।
हारा स्वदेहनिहिता जनयति स्फोटकाशकाम् ॥ १५ ॥

एतच्च न संप्रति दूत्ये त्वरयति । अत्र हि ।

अस्माभिः शिशिरोपचारविधिना कृच्छ्रात्समाश्वासिता
सकल्पाहितकांतसन्निधिसुखा मोहावसाने पुनः ।
सा बाला विवशा प्रवालशयनादुत्थाय सम्भ्रमय
स्मेरा किंचिदधोमुखी सशनकैराकाशमालिंगति ॥ १६ ॥

( अन्यतो विलोक्य ) कथमसौ माधवीवनपालिका गंधवती । भद्रे गंधवति विमुक्तमाधवीवनविहारसुखा किमिति द्वारोपांत एव वर्तसे । किं ब्रवीषि ।

अज्झ अब्भंतरे वअस्ससहिदो दासरही वट्टइत्ति युज्यते ( आत्मगतं ) सफलं नो दौत्यं ( व्रीडां नाटयति ) गंधवती तेणं हि अहंपि लज्जेमि तस्स पासे विहरिदुं अण्णदो विहरिस्सं ति । कथं अपक्रम्य निष्क्रांता गंधवती। पंढः ( निर्वर्ण्य ) अहो रामणीयकं माधवीवनस्य। इह हि।

अयं खलु विलासिनीमुखसरोजगण्डूपितै–
र्विभाति मधुसीकरैरसमयेपि संभावितः ।
मदांधमधुपांगनाजननिपीतकादंबरी–
रसप्रसरधूसरः प्रसवकेसरः केसरः ॥ १७ ॥

कंहं सिंजअरवाअड्डा घटेंति मे तुलाकोडिकोडिसु उज्जाणदिग्घिआसु कलहंसिआ ता जह एदेण सिंजंति मंजीरिआ तह एअं उद्देसं णिस्संद– अण्णा संगच्छेमि ( तथा परिक्रम्य ) यावदहं रामचंद्रमासाद्य दूत्यं संपादयामि ( विचिंत्य सखेदं ) अहवा कित्तिएत्ति अहं पिअसहिए सोअ- णिज्जं दसं णिवेदेमि भट्टिणो । सा खु ।

परितवइ थणाणं मोहविण्णत्तणाणं
अकअतवगुणाणं तस्स आलिंगणाणं ।
अह अ णिअरुआए अप्पडीआरदाए
ण हु मुणइ सहीओ अप्पणोसा सहीओ ॥ १८ ॥

( उपवनं निर्वर्ण्य ) अयथालं एभिः शोभनीयाक्षरैः ।

---

१ आर्य अभ्यंतरे वयस्य सहितो दशरथिः वर्तते इति । २ तेन हि अहमपि लज्जे तस्य पार्श्वे विहर्तुं तस्मादन्यतो विहरिष्यामि । ३ कथं शिंजितरवाकृष्टा घटते मे तुलाकोटिकोटिषु उद्यानदीर्घिकासु कलहंसिका । तस्माद्यथेते न शिंजंति मंजरिकास्तथा एतमुद्देशं निष्पंदे अन्यान् संगच्छामि । ४ अथवा कियतीत्यहं प्रियसख्याः शोचनीयां दशां निवेदयामि भर्तुः । सा खलु । परितपति स्तनयो- र्मोघविज्ञ.तयोरकृततपगुणयोस्तस्यालिंगनयोः । अथ च निजरूपया अप्रतीकारतया नहि जानंति सख्यः आत्मरागोशाः ।

अभ्यग्रपुष्यत्सहकारमेतत्
मंदानिलस्वैरविहारहृद्यम्।
उद्यानमुद्दाममनोभवं नः
करोति साहाय्यकमद्य कृत्ये ॥ १९ ॥

( पुरोवलोक्य ) मन्ये स एव दाशरथिः परममित्रं गार्ग्यायणः यावदुपसर्पामि।

( उपसर्पति )

( ततः प्रविशति विदूषकः )

विदूषकः— ( दृष्ट्वा ) केहं एका एसा महणिज्जा इत्थिआ ( उपसृत्य ) होदि कुदो मं उवसप्पासि।

पंढः—अज्ज किं वि पुच्छिदुं।

विदूषकः—तेण हि पुच्छेसि ते समीहिअं

पंढः—कहिं दे पिअवअस्सो।

विदूषकः—को मे पिअवअस्सो।

पंढः—दासरहि।

विदूषकः—किं तं जाणासि।

पंढः—कहं सुज्जं हत्थेण ओआरेसि।

विदूषकः—किं तेण कज्जं।

पंढः—किंपि तस्स पणयिणि संदेसं आचक्खिउं।

विदूषकः—का वा तस्स पणयिणि।

पंढः—सीआ।

---

१ कथमेषा महनीया स्त्री। २ भवति कुतो मामुपसर्पसि। ३ आर्य किमपि प्रष्टुं। ४ तेन हि पृच्छ ते समीहितं। ५ कस्मिन् ते प्रियवयस्यः। ६ कोऽयं प्रियसखः। ७ दाशरथिः। ८ किं तं न जानासि। ९ कथं सूर्यं हस्तेनापवारयसि। १० किं तेन कार्यं। ११ किमपि तस्य प्रणयिन्याः संदेशमाख्यातं। १२ का वा तस्य प्रणयिनी। १३ सीता।

विदूपकः—( सहर्षं ) किं[1] तुमं तस्सा सहि ।

पंढः—ओम[2] ।

विदूपकः—( सहर्षं ) तेण[3] हि विरमेमि इमादो परिब्भमादो ।

पंढः—किंति[4] खु पुव्वं परिब्भमेसि ।

विदूपकः—तत्तहोदी[5] सिसिरोवआरोवआरणाणि आणेदुं परिब्भमामि तुमं पुण दाणिं तस्स अणिरिसं सिसिरोवआरोवअरणं लद्दा ता एहि दाणिं सिग्घं वअस्सस्स पासं येव्व गमिस्सम्म ।

पंढः—तथा ।

( परिक्रामतः )

( ततः प्रविशति रामः )

रामः–( सोत्कंठं ) सा खलु ।

श्लाघा विभ्रमलक्ष्या शृंगाररसाधिदेवता साक्षात् ।
संचारिणी पदाभ्यां मूर्तिमती कैशिकी वृत्तिः ॥ २० ॥

अहो दुर्वारा मानसी प्रवृत्तिः । अय हि ।

स्पृशति मयि सा रुणालीकव्यलीककलंकिते
किमपि रुदति यन्मोहान्ते भयोच्छ्रितवेपथुः ।
कमलकलिकाव्रातस्मेरा व्यलोकत सस्पृहं
स्फुरति हृदि तत्किंचिद् व्रीडांचितं किलकिंचित् ॥ २१ ॥

किंच सुमहदिह वयं विस्मेराः यदुत विषयनुषंगकलुषितं जनं परिविर्दंतो वयमेव कामुकजनधैर्यामिषघस्मरेण स्मरेण सर्टाकृता स्मः । अथवा ।

---

१ किं त्वं तस्याः सखी । २ ओम् । ३ तेन हि विरमते अस्माद् परिभ्रमात् । ४ किमिति खलु पूर्वं परिभ्रमसि । ५ तत्रभवती शिशिरोपचारोपकरणान्यानेतुं परिभ्रमामि त्वं पुनरिदानीं तस्यानीदृशं शिशिरोपचारोपकरणं लब्ध्वा तस्मादेहि इदानीं शीघ्रं वयस्यस्य पार्श्वमेव गमिष्यावः ।

स्वच्छांतरात्मापि गुणेन मन्ये
न स्याद्वशो दर्पक शासनस्य ।
तस्याः स्तनौ यन्नवकुंकुमार्द्रौ
चाश्लिष्य हारोप्यनुरक्त आसीत् ॥ २२ ॥

( विचिंत्य ) कथं नु भो तद्गुणचिंतादुस्थितं चेतः पर्यवस्थापयामि ( विभाव्य )

यत्र यत्र मया दृष्टा दृष्टिरम्या मृगेक्षणा ।
विनोदयेयमात्मानं तं तमुद्देशमुद्दिशन् ॥ २३ ॥

( अवलोक्य सकौतुकं ) ।

अत्राकारणरूढकोपजनितां मूर्छां विषादोत्तरां
तत्कालोपनतेन निःसहतनुः कृच्छ्रान्मया मोचिता ।
अग्रे मामथ वीक्ष्य सेर्ष्यमकरोद्व्यापस्तुं मनः
सव्याजं नयनांतमत्र विधुरं यांती मयि प्राहिणोत् ॥ २४ ॥

( सखेदं ) कथमेतदपि नालं विरहखेदापनोदनाय ( सविस्मयं ) ।

चित्रं नः स्फुरतीदं हृदयमनेनापि विरहदहनेन ।
कुसुमशरस्यापि शरा निर्मग्ना नैव दह्यंते ॥ २५ ॥

( विचिंत्य ) क इवात्र समाधिः । वयस्य गार्ग्यायण ( पार्श्वतोऽवलोक्य ) कथं न संनिहितो वयस्यः अहो मे प्रमादः मयैव हि शिशिरोपचारसज्जीकरणाय प्रेषितो वयस्यः ( पुरो विलोक्य ) कथमेकया स्त्रिया सहितः प्रहृष्ट इव वयस्यः इहागच्छति । ( निरूप्य ) नहि नहि येन केन पुरुषेण ( विभाव्य ) कथमसौ तृतीया प्रकृतिः । कुतः खल्वयमनियुक्तकारी केनापि पंढेन सहागच्छति वैधवेयः ।

विदूषकः—( उपसृत्य ) जेयदु पिअवअस्सो ।

पंढः—जयतु स्वामी ।

१. जयतु प्रियवयस्यः ।

5502

विदूषकः—अम्हो पुव्वं इत्थिआ विअ मए संजप्पिअं वअस्सेण दाणिं पुरिसो विअ संभासदि ।

रामः—वयस्य क एष ते प्राघूर्णकः ।

विदूषकः—एसो खु तुह सिसिरोवआरो ।

रामः—न खलु यथावज्जानामि ।

विदूषकः—एसो खु तत्तहोदिए सीदाए तुए संजाहुकंठाए पहिदा दूई ।

रामः—( सादरं ) आर्य स्वागतं इहोपविश्यतां ।

मंदः—यथाज्ञापयति स्वामी ।

रामः—वयस्य उपविश ।

विदूषकः—जं भवं भण्णाति ।

( सर्वे उपविशंति )

रामः—( मंदं प्रति ) सखे प्रियावृत्तांतनिवेदनेन विध्यापय विरहवन्हिं ।

मंदः—शृणोतु स्वामी ।

सख्यास्तावद्विरहविधुरं भावमाख्यातुकामः
प्रेमाक्रांतं हृदयमपि ते तादृशं तर्कयामि ।
विस्रंभोऽयं मुखरयति मामंग तस्मादिदानी-
मागंतव्यं त्वरिततरमित्येव विज्ञापयामि ॥ २६ ॥

विदूषकः—तंहवि कहेहि तत्तहोदीए अवत्थं ।

रामः—सखे कथ्यताम् ।

मंदः—

१ अहो पूर्वं स्त्रीव मया संजल्पितं वयस्येनेदानीं पुरुष इव संभाषयति । २ एष खलु तव शिशिरोपचारः । ३ एषा खलु तत्रभवत्या सीतया त्वयि संयोगमुत्कंठितया प्रहिता दूती । ४ यद्भवान् भणति । [illegible] पि भवत्या अवस्थाम् ।

अंगाकर्णय सा हि मन्मथशरासारैकलक्षीकृता
नो मिथ्याकुरुते वचांसि विरहे बाला कवीनामपि।
किं वा संप्रति कथ्यते बहुतरं यत्सत्यमत्रांतरे
सर्वस्यापि सखीजनस्य भवतो नामैव नामाभवत् ॥ २७॥

विदूषकः—[1]ऐकग्गचित्तदा खु वाअंपि तह पवट्टावेदि।

चंद्रः—न केवलं नाममात्रेण तस्याश्चेतोविपर्यासः। एवं च सत्यसौ सखीं वदति। यथा।

संकल्पैस्तु पुरःस्थितेन बहुशस्त्वं विप्रलब्धासि ते
कांतेनेति शुचा निवारयसि मां प्रत्युत्थितां संप्रति।
याचे त्वामयमंजलिः प्रियसखि प्रत्यागते वल्लभे
साक्षादागतवानसाविति शनैः कर्णे तदा मे वद ॥ २८ ॥

रामः—अहो संकल्पानां दृढिमा।

विदूषकः—[2]उभयं खु विरहिआणं पिअजणसमाअमसोक्खं जणेइ संकप्पा णिद्दा अ।

चंद्रः—कुतः खलु तस्या निद्रागमः। एवं तु पुनर्निद्रार्थिनी सखीं व्याहरति यथा।

निद्रायै प्रयते यथा पुरमहं त्वं चालिपार्श्वे स्थिता
त्वं स्वप्नागतमार्यपुत्रमुचितं विज्ञाय विज्ञापय।
स्वस्ति स्वागतमंग पश्य भवत कांतामिमामीदृशीं—
तयावद्भयनादतः परमितस्त्वं धीरमागा इति ॥ २९ ॥

रामः—अहो संभावनीयमेतन्मौग्ध्यं।

---

१ एकाग्रचित्तता खलु वाचमपि तथा प्रवर्तयति। २ उभयं खलु विरहवर्तीनां प्रियजनसमागमसौख्यं जनयति संकल्पा निद्रा च।

विदूषकः—कें अतिमेत्तं किलंता मणोभवेण तत्तहोदी।

पंढः—अयि भो रामदेव।

किसलयलीलातरला विसवलयविलासकोमलच्छाया।
सा कुसुमवाणवाणा सारेण सदा समाविद्धा॥ ३०॥

विदूषकः—( सविस्मयं ) वंअस्स एक्काए वाआए संकिअं पाउदं मणइ एस वाआकुसलो अदो एव्व खु संलप्पिआदि इत्थिआ पुरिसो अ।

रामः—( सस्मितं ) साधूक्तं।

विदूषकः—अज्जं पकिदं चेअ अणुसरिअदु।

पंढः—तथास्तु।

विदूषकः किं वों वण्णिआदि दिट्ठा चेअ खु सा मए वअस्सदसा। जं एसरमणिज्जंपि कोइलकूचिदादिं उव्वेअणिज्जं मुणेइ।

पंढः—युज्यत एतत्। इत्यमेव हि सा मन्मथार्ता सखीं प्रार्थ्यते तथा।

मूकाशोकमवेक्ष्य मे प्रियसखी जाता स्वयं सारिका
कर्तव्यं त्विदमेव संप्रति सखि प्राप्तं तवावश्यकम्।
दत्वा विप्रलभस्व दाडिमफलं तं चावदूकं शुकं
तूर्णं चोत्कुरु कोकिलानुपवनात्कोकूयमानानिमान्॥ ३१॥

संभाव्यते एवैतत्।

विदूषकः—ऐआरिसं दसं अणुहवतीं तत्तहोदिं किं सिसिरोवआरेण पढिअवट्ठेवइ सहिअणो।

---

१ कथमतिमात्रं क्लान्ता मनोभवेन तत्रभवती। २ वयस्य एकया वाचा संस्कृतं प्राकृतं भणत्येष वाक्कुशलः अत एव खलु संलप्यते स्त्री पुरुषश्च। ३ आर्य प्रकृतिरेवानुश्रियताम्। ४ किं वा वर्ण्यते दृष्टैव खलु सा मया वयस्यदशा यदेष रमणीयमपि कोकिलकूजितादि उद्वेजनीयं जानाति। ५ एतादृशीं दशामनुभवतीं तत्रभवतीं किं शिशिरोपचारेण प्रत्यवस्थापयति सखीजनः।

पंढः—एवं सा मुग्धा सज्जीकृतशिशिरोपचारामपि सखीमुपालभते । यथा ।

यत्स्वेदांबुविनिग्रहाय सुतरां सज्जीकृतं मे त्वया
खिद्यत्यद्य हि मां शुभादनिहितं तच्चंद्रकांतस्थलम् ।
तत्खेदप्रतिकारमस्य कुरु तैः कर्पूरचूर्णैर्मुहुः
शीतैः शीतलिकानिलैरपि सखि प्रागेव तद्वीजय ॥ ३२ ॥

रामः—अभिरूपोऽयमुपालंभः ।

विदूषकः—ऐअस्स एआरिसिं तत्तहोदि असमंसासेयंतो तुमं खु एत्थ उपालंभं अरुहेसि ।

पंढः—न खल्वसावुपालब्धव्यः । परंतु प्रशंसितव्यः । ( रामं प्रति )

त्वं कल्याणिन् जगति कृतिनामेक एवाग्रगण्यः
संतापानामपि च न भवान् भाजनं तद्विधानाम् ।
दिष्ट्या दृष्टं न खलु भवता यत्पुरः शोकमूकं
सख्या चक्रं सततरुदिताकेकरोच्छूनचित्रम् ॥ ३३ ॥

रामः—( सस्मितं ) सखि साधु त्वमुपालंभविमुखासि ।

विदूषकः—ऐअरिसस्स संदावस्स कहं उवसमं करोदु सहिअणो ।

पंढः—स्वयं पुनरसौ सखिकृतां शिशिरक्रियामसहमाना शिशिरसंविधानकमन्यदुपदिशति । यथा ।

मामेवं सखि किं पुनः पुनरपि व्यर्थैः क्रियाकौशलैः
क्लेश्येह शिशिरोपचारमपरं वृत्तावधाना भव ।
चंद्रं स्नापय चंद्रकांतसलिलैश्चंद्रातपं चंदन-
क्षोदेन क्षिप वीजयार्द्रकदलीपत्रेण चैत्रानिलान् ॥ ३४ ॥

---

१ वयस्य एतादृशीं तत्रभवतीमिषमाश्वासयन् त्वं खलु अत्रोपालम्भमर्हसि ।
२ एतादृशस्य संतापस्य कथमुपशमं करोतु सखीजनः ।

रामः—अहो अनीदृशं शिशिरकर्म ।

विदूषकः—हद्धि हद्धि किं अदो वरं पडिवज्जइ सहि ।

चंद्रः—इत्थं तु सासि पुनरपि लपति । यथा ।

वक्त्रं ते प्रतिबिंबितं मरकतस्निग्धेम्बरे नो शशी
वंताशुर्विशदैरपांगकिरणैर्मिश्रो न चंद्रातपः ।
निःश्वासाः प्रसरंति तापविषमा दीर्घं न मंदानिलाः
कष्टं किं प्रति संप्रति प्रियसखि त्वं विक्लवा क्राम्यसि ॥ ३५ ॥

रामः—समुचितोयमपलापः । सखिजनायत्तं खलु विरहिणीनां जीवितम् ।

विदूषकः—कहं खु इत्थंभूदंपि अप्पाणं समंसासेतं वअस्सं तत्तहोदी समंसासइसिदित्ति विस्ससेदुं ।

चंद्रः—एवमेतत् । ( रामं प्रति )

विरतस्त्वयि विश्वासः सख्याः शठ दुःसहोष्णनिःश्वासः ।
न कुतोपि समुच्छ्वासः कथय कथं तावदाश्वासः ॥ ३६ ॥

विदूषकः—को वा तिस्से आसासो जइ सिसिरोवआरंपि पडिदेसइ ।

चंद्रः—न केवलं प्रतिद्वेष्टि इत्थं च सखीमानिच्छंतीं नियुंक्ते । यथा ।

किं मामित्यमुपेक्ष्यसे सखि मुधा निर्व्याजमुत्थीयतां
सद्यो मुद्रय कैरवाणि मधुपान् कुत्रापि विद्रापय ।
पाताले शशिनं निधेहि जलधौ ज्योत्स्नां समावर्जय
स्कंधे बंधय गंधसिंधुरपदस्तंभेषु मंदानिलान् ॥ ३७ ॥

---

१ हा धिक् हा धिक् किमतः परं प्रतिपद्यते । २ कथं खलु इत्थंभूतमप्यात्मानं समाश्वासयंतं वयस्यं तत्रभवती समाश्वासतीति विश्वसितुं । ३ को वा तस्या आश्वासः यदि शिरोपचारमपि प्रति द्वेष्टि ।

विदूषकः—ईरिसिं तत्तहोदिं पच्चक्ख पेक्खवतो सहिअण्णो एव्व ताए सोअणिज्जो ।

रामः—समसुखदुःखो हि सखीजनः ।

पद्म—इत्थं खलु तस्याः सख्यः शोचति । यथा ।

अंगेषु प्रतिबिंबितस्तव शशी सख्यामसौ लग्यते
ज्योत्स्नेयं तव दन्तकुन्दमुकुलच्छायाभिराम्रेडिता ।
निश्वासैस्तव वर्द्धिता सुरभयो वासन्तिका वायवः
कष्टं भो कथमित्थमत्रभवतीमाश्वासयामो वयम् ॥ ३८ ॥

विदूषकः—कहं अवत्थंतरं आरूढा तत्तहोदीए विरहावत्था ।

पद्म०—( रामं प्रति ) ।

अनाल बहु विप्रलभ्य विरहावस्थोचितास्ताः कथाः
कल्याणाभिनिवेशिना कृतमिदं कार्श्यं कृशाङ्ग्याः शृणु ।
सवृत्तौ कठिनेतरौ स्तनतटौ कात्यार्यशिष्टं वपुः
मध्यं क्वापि गतं प्रकोष्ठवलयं केयूरतामागतम् ॥ ३९ ॥

विदूषकः—कहं दुस्सहं से उत्तं ।

रामः—अव्यपदेश्यां खलु दशामारोपिता सीता विरहिजनोत्पातधूमकेतुना मकरकेतुना ।

पद्म—तत्र वृत्तो मामुपसृत्य निर्गच्छता प्रियसख्या विनीतया मह्यमुनीतं । सरसहरिचन्दनक्षोदलिखितसंदेशवचनं केतकिकुसुमगर्भपत्र दलपत्रलीलापदेशेन मया समानीतं ( इति कर्णादादायोपनयति ) ।

रामः—( सोत्सुक्यमादाय वाचयति ) ।

दसणमेत्तकुरिओ सह्यावेहिं सवा अ पल्लविओ ।
पस्स सुरेण कुसुमिओ अपि णाम फलेज्जई कुसुमसरो ॥४०॥

---

१ ईदृशीं तत्रभवतीं प्रत्यक्षं पश्यन् सखीजन एवं तया शोचनीयः । २ कथं अवस्थांतरमारूढा तत्रभवत्या विरहावस्था । ३ कथं दुःसहं अस्या वृत्तं ।

पुनः पुनर्वाचयति ( सोत्कंठमाकाशे लक्ष्यं बद्धा ) प्रिये जनकपुत्रि

अलमलं परितापपरिश्रमै-
स्तननिपीड्य मनः सुमनस्समम् ।
स हि फलेदचिरात्कुसुमायुधो
यदि भवेत् सफलं मम जीवितम् ॥ ४१ ॥

विदूषकः—किं अवरं एत्थ विलंबिआदि अवलंबिदं खु वअस्सेण तत्त-होदिं समस्सासेदुं । गंतव्वं ।

पंढः—( रामं प्रति ) ।

यद्यपि गमिष्यति भवान् भवदागमनोत्सवप्रबोधाय ।
स्पंदितुमपि न क्षमते वामाक्ष्या वाममप्यक्षि ॥ ४२ ॥

विदूषकः—एदं पि उद्दीवणं तत्तहोदो गमणं तराए ।

पंढः—

सख्याः किं बहुना त्वमेव शरणं किं चान्यदाकर्ण्यतां
काले धीर विलंबसे किमपरं सोयं समीपस्तव ।
स्त्यायच्चंदनपंकपंकिलविलव्यामुग्धमुक्तालता—
लीलानिर्भरविभ्रमस्तनभराभोगोपभोगोत्सवः ॥ ४३ ॥

रामः—( पंढं प्रति ) ननु त्वदेकशरणोऽयं जनः तत्कथय किमत्रौपयिकं ।

पंढः—स्वामिन्नस्यैव माधवीवनस्य दक्षिणतः पुष्पवाटिकामुत्तरेण पाश्चात्येन प्रमदवनपक्षद्वारेण प्रविश्य प्रदोषसमयेत्र तमालवीथिकया निभृतं भवद्भिश्चंद्रकांताधारागृहमासादनीयम् ।

रामः—यदाह भवान् ।

---

१ किमपरमत्र विलम्ब्यतेऽवलंबितं खलु वयस्येन तत्रभवतीं समाश्वासयितुं गन्तव्यं । २ एतदपि उद्दीपनं तत्रभवतो गमनं त्वरायाः ।

विदूषकः—[1]जुत्तं आचक्खिदं अज्जेण दाणिं पउत्ता मज्झण्हसंझा अदिक्कामदि भोअणवेला ता जाव गच्छेम्मो ।

रामः—यद्भवते रोचते ।

पंढः—यदाह भवान् ।

( सर्वे उत्तिष्ठंति )

पंढः—( निर्वर्ण्य ) अहो निर्जडिमतया जर्जरितजगज्जडो जरढात-पस्तपनः । अद्य हि ।

क्षपितजलदावलेपे नभःस्थले घर्मदीधितौ तपति ।
घर्मजलमेव केवलमवशिष्टं निर्जले जगति ॥ ४४ ॥

रामः—

द्विरेफमिथुनं द्रुतं कमलिनीदलानामधः
स्थितं भजति पंकजं रविकरैरसंतापितम् ।
तमालतरुपादमूलमधिशेरते बर्हिणः
पिपासुरुपसेवते मृगगणोपि धारागृहम् ॥ ४५ ॥

( निष्क्रांताः सर्वे )

इति श्रीमद्गोविंदस्वामिनः सुनुना हस्तिमल्लेन विरचिते
मैथिलीकल्याण नाम्नि नाटके तृतीयोऽङ्कः ॥ ३ ॥

---

1. युक्तमाख्यातमार्येणेदानीं पुनः प्रवृत्ता मध्याह्नसंध्यातिक्रामति भोजनवेला तस्माद्यावद्गच्छामः ।

## चतुर्थोऽङ्कः ॥ ४ ॥

( ततः प्रविशति चेटी )

**चेटी**–( निर्वर्ण्य ) अह्मो इमस्स सुहसेबिदामंदवाअत्थसीअलपदोसाणिलकअपरिरंभस्स पुणरुत्तविवड्ढंतपुष्फाउहसंरंभस्स पदोसारंभस्स । दाणिं खु साअंतणधूविज्जंतकालाअरुधूवकसणा कसणकज्जलाधिवासिदे विअ कव्वुरे अंबरे उदअराअकह्मायखोदसम्माणिदा पडिवालेदि रोहिणीपडिं तिमिरच्छडच्छणीलकोसेअओगुंठिएण णातिपरिफुढलक्खिज्जंततारागणमोत्तहारा पुव्वदिसा । ( विलोक्य ) एसो अ दाणिं उदिओ णिरंतरुप्फुल्लरत्तकं-

१. अहो अमुष्य सुखसेविता मंदवाता शीतलप्रदोषानिलकृतपरिरंभस्य पुनरुक्तविवृद्धपुष्पायुधसंरंभस्य प्रदोषारंभस्येदानीं खलु सायंतनधूमायमानकालागुरुधूपकृष्ण कृष्णकज्जलाधिवासिते इव कर्बुरेम्बरे उदयरागकाश्मीरक्षोदसंमानिता प्रतिपालयति रोहिणीपतिं तिमिरच्छटाच्छनीलकौशेयावगुंठितेन नातिपरिस्फुटलक्ष्यतारागणमुक्तहारा पूर्वदिक्। २. एष चेदानीमुदितो निरंतरोत्फुल्लरक्तकंकेलिकुसुमस्तवकविभ्रमो विरहिजनधैर्यनि.शैलनिर्मोटनखंडाशनिसन्निभः विघटितमिथुनमानग्रहजनितरोपरंजितवचनमिव मन्मथस्य सज्जीकृत इवाधिकवाससौगंधिकमालाबंधज्योत्स्नामधुररसपानशौंडानां चकोरमिथुनानां प्रतिष्ठितनिजमुखकांतिलब्धशोभातिशय इव मणिदर्पणरीत्या अमृतमथनरभससंभ्रमोत्थित इव मंदरगिरिशिखरस्थितसीकरविष्णुचूडामणिकिरणवासनाद्गुणशोणिमेव शेषफणिफणामंडलं । स्तनांशुकापवारित एकस्तनायाः इतर इव कुंकुमपंकपंकिलो स्तनः ज्योत्स्नावध्वः जलनिधितरंगविक्षिप्त इव प्रवालप्रभापाटलितः शंखः दिनकरविरहपरितापितायाः स्तननागरागारुणित इव शिशिरोपचारकमलिनीपत्रं गगनलक्ष्म्याः हरिचंदनतिलकमिव निषधगिरिगजवरस्य क्रीडाकंदुक इव निशीथिनीकन्यकाया अनंगविजयडिंडिमपुष्करप्रवृत्तवर्तुलः पद्मनाभनाभिसरः प्ररूढमिव हेमपुष्करं कामुकजनमनोरथपरिवर्तनैकस्यांगभूतः मकरध्वजविजयरथांगभूतः सिंधूरित इव ऐरावणकुंभः लावण्यरसाविधानरत्नकुंभो अंभोजिनीशत्रुः । अथ हि कमलोदरगृहाभ्यंतरनिर्गता मुद्रितकलहंसनूपुररवा विष्कांतसारसरसना सीता प्रतिनवसमागमरसरसिका अभिसारयति तत्कालसमुद्गतं कुमुदाकरं लक्ष्मी ।

केलिकुसुमथनअविब्भमो विरहिजणधीरसेलणिम्मोडणसंडासाणिसण्णिहो । विहडअमिहुणमाणगहजणिदरोसरंजिअवअणं विअ मम्महस्स सज्जीकओ-विअ अधिवाससोगंधिअमालवंधो ज्योण्हा महुरसपाणसुंडाणं चओरमिहुणाणं पडिट्ठिअणिअमुहकंतिलद्धसोहादिसओ विअ मणिदप्पणो राईए अमअमहणरमसभंगुट्ठिओ विअ मंदरगिरिसिहरट्ठिओसीअरोविण्हचूडामणिकिरणवासणद्दिउणसोणिमं विअ सेसफणिफणामंडलं थणंसुओवारिअकत्थणाए इदरो विअ कुंकुमपंकपंकिलोथणो जोहणावहुए जलणिहितरंगविक्खित्तो विअ पवालपहापाडलिओ संखवो दिणअरविरहपरिदाविदाएं थणंविअ सिसिरोवआरकमलिणिपत्तो गअणलच्छीए हरिचंदणातिलअं विअ णिसहगिरिगअवरस्स । किल्लाकंडुओ विअ णिसिहिक्कण्णअए अणंगविजअडिंडिमपोक्खरपवट्टवट्टुलो पडुमणाहणाहिसर परूढं विअ हेमपोक्खरं कामुअजणमणोरहपरिवड्डणेक्करहंगभूदो मअरन्द्धअविजहरहंगभूदो सिंधूरिओ विअ एरावणकुंभो । लावण्णरसणिहाणरअणकुंभो अंमोइणीसत्तू । अज्ज हि कमलोअरघरब्भंतरणिग्गया मुद्दिअकलहंसणेउर रवा विसंतसारसरसणारसीआ पद्दिणवसमा अमरसरसिआआभिसारेइ तक्कालसमुच्छसंतं कुमुदाअरं लच्छि ( विचिंत्य ) ऐअं च सव्वं मे उपआरअं सिसिरोअवआरकिरिआए । जाव सज्जीकअसिसिरोवआरं सज्जिअं चंदअंतदारघरअं णिवेदेमि मट्टदारिआए कहिं खु दाणि सा वट्टइ ।

( ततः प्रविशत्यपरा चेटी )

चेटी—आणत्तम्हि भट्टिदारिआए सीदाए जह हंजे सुउमारिए वलवई खु मे दाणिं सीसवेअणा को कालो अ चंडअंतदारादरअं सज्जीकाउं

१ एतच्च सर्वं मे उपकारकं शिशिरोपचारक्रियायाः यावत्सज्जीकृतशिशिरोपचारं सज्जितं चंद्रकांतदारागृहं निवेदयामि भट्टारिकायाः । कस्मिन् खल्विदानीं सा वर्तते ।
२ आज्ञप्तास्मि भर्तृदारिकया सीतया यथा सुकुमारिके बलवती खलु मे इदानीं शिरोवेदना कः कालश्च चंद्रकांता धारागृहं सज्जीकर्तुं गतायाः प्रियसख्याः कौमुदिकायाः । तस्मात्त्वया शीघ्रं ज्ञात्वागंतव्यमिति यावत्तस्मिन् गच्छामि ।

गआए पिअसहिए कोमुदीआए । तां तुए सिग्घं आणिअ आअंतव्वंति जाव तहिं गच्छेमि । ( परिक्रामति )

**प्रथमा**—( विलोक्य ) का उण एसा इदो अभिवट्टइ ( निरूप्य ) कहं पिअसहि सुहुमारिआ ।

**द्वितीया**—( दृष्ट्वा ) कहं पिअसहि कौमुदीआ ।

**प्रथमा**—सहि कुदो आअच्छसि ।

**द्वितीया**—हला कोमुदीए अहं खु इदो आअच्छंतीए तुमं चिराअसित्ति दाणिं दु भट्टदारिआए अग्गदो णिउत्ता । किं तुए सज्जीकअन्तं धाराघरअं ।

**प्रथमा**—ओम ।

**द्वितीया**—हला चिट्ठदु एअं को णु एसो भट्टिदारिआए संदाओ जो सिसिरोवआरेहिंपि पच्चहं वड्ढेदि ।

**प्रथमा**—रहस्से खु दाव अप्पावि संकिदव्वो ।

**द्वितीया**—एव्वं एदं तहवि रहस्सेति भणंति । अइमेत्तं मं ऊसिएसि ।

**प्रथमा**—कहं वा पिअसहिए रहस्सं रक्खेमि सुणाहि दाव ।

**द्वितीया**—अवहिदह्मि ।

---

१ का पुनरेषा इतो अभिवर्तते । २ कथं प्रियसखी सुकुमारिका । ३ कथं प्रियसखी कौमुदीका । ४ सखि कुत आगच्छसि । ५ सखि कौमुदिके अहं खलु इत आगच्छंत्यास्त्वं चिरायसीतीदानीं तु भर्तृदारिकया अग्रतो नियुक्ता । किं त्वया सज्जीकृतं तद्धारागृहं । ६ ओम् ( स्वीकारे ) । ७ सखि तिष्ठत्वेतत् [illegible] नु एषो भर्तृदारिकायाः संतापो यः शिशिरोपचारैरपि प्रत्यहं । ८ [illegible] खलु तावदात्मापि शंकितव्यः । ९ एव[illegible] रहस्यमिति अतिमात्रं मामुत्सुकयसि । १० कथं वा [illegible]
११ अवहितास्मि ।

प्रथमा—हंजे एवं खु अहं तुमं विअ पुणो णिब्बंधिअ पुच्छति पिअसहीए भणिदम्हि कलावईए जह सहि कोमुदीए पुव्व खु वसंतदोलारोहणदिणे कामदेवघरब्भंतरे दिट्ठो भट्टदारिआए भट्टा रामो पुणो अ माहविवणे अप्पम्हि उक्कंठंतो दिट्ठो सो एव्व दाणि भट्टिदारिआए संदावहेउत्ति।

द्वितीया—हंला जुंजइ।

प्रथमा—हंला किं दाणि अम्हे भट्टिदारिआपासं गच्छेमो आदु चंदअंतधाराघर एव पडिवालेमो।

द्वितीया—एव्वं खु अहं पिअसहिए भणिदम्हि विणीदाए जह सहि सुउमारिए बहुजणपलाव ण सहइ सीसवेअणादिरेअदो भट्टिदारिआ ता सहिअणंपि सव्वं पमअवणदुवारे एव्व णिसिहेहित्ति।

प्रथमा—तेणं हि तुमं तं णिओअं अणुचिट्ठ, अहं पि सज्जीकअं धाराघरअं भट्टिदारिआए णिवेदेमि।

द्वितीया—सहि तह।

(निष्क्रान्ते)

---

१. सखि एवं खलु अहं त्वमिव पुनर्निबध्य पृच्छंति प्रियसख्या भणितास्मि कलावत्या यथा सखि कौमुदिके पूर्वं खलु वसंतदोलारोहणदिने कामदेवगृहाभ्यंतरे दृष्टो भर्तृदारिकायाः भर्ता रामः। पुनश्च माधवीवने आत्मनि उत्कंठमानो दृष्टः स एवेदानीं भर्तृदारिकासंतापहेतुरिति। २ सखि युज्यते। ३ सखि किमिदानीमावां भर्तृदारिकापार्श्वं गच्छाव अथवा चन्द्रकांतधारागृहे प्रतिपालयाव। ४ एवं खल्वहं प्रियसख्या भणितास्मि विनीतया यथा सखि सुकुमारिके बहुजनप्रलापं न सहते शीर्षवेदनातिरेकत भर्तृदारिका तस्मात्सखिजनमपि सर्वं प्रमदवनद्वारे निरोधयेति। ५ तेन हि त्वं तं नियोगमनुतिष्ठ अहमपि सज्जीकृत्य धारागृहं भर्तृदारिकाया निवेदयामि। ६ सखि तथा।

गआए पिअसंहिए कोमुदीआए । तां तुए सिग्घं आणिअ आअंतव्वंति जाव तहिं गच्छेमि । ( परिक्रामति )

**प्रथमा**--( विलोक्य ) का उण एसा इदो अभिवट्टइ ( निरूप्य ) कैह पिअसहि सुहुमारिआ ।

**द्वितीया**—( दृष्ट्वा ) कैहं पिअसहि कौमुदीआ ।

**प्रथमा**—सैहि कुदो आअच्छसि ।

**द्वितीया**—हैला कोमुदीए अहं खु इदो आअच्छंतीए तुमं चिराअसित्ति दाणिं दु भट्टदारिआए अग्गदो णिउत्ता । किं तुए सज्जीकअंन्तं धाराघरअं ।

**प्रथमा**—औम ।

**द्वितीया**—हैंला चिट्ठदु एअं को णु एसो भट्टिदारिआए संदाओ जो सिसिरोवआरेहिंपि पच्चहं वड्ढेदि ।

**प्रथमा**—रहस्से खु दाव अप्पावि संकिदव्वो ।

**द्वितीया**—ऐव्वं एदं तहवि रहस्सेति भणंति । अइमेत्तं मं ऊसिएसि ।

**प्रथमा**—कैहं वा पिअसहिए रहस्सं रक्खेमि सुणाहि दाव ।

**द्वितीया**—अैवहिदाह्मि ।

---

१ का पुनरेषा इतो अभिवर्तते । २ कथं प्रियसखी सुकुमारिका । ३ कथं प्रियसखी कौमुदीका । ४ सखि कुत आगच्छसि । ५ सखि कौमुदिके अहं खलु इत आगच्छंत्यास्त्वं चिरायसीतीदानीं तु भर्तृदारिकया अग्रतो नियुक्ता । किं त्वया सज्जीकृतं तद्धारागृहं । ६ ओम् ( स्वीकारे ) । ७ सखि तिष्ठत्वेतत् का नु एषो भर्तृदारिकायाः संतापो यः शिशिरोपचारैरपि प्रत्यहं । ८ रहस्ये खलु तावदात्मापि शंकितव्यः । ९ एवमेतत्तथापि रहस्यमिति भणंति । अतिमात्रं मामुत्सुकयसि । १० कथं वा प्रियसख्या रहस्यं रक्षामि शृणु तावत् । ११ अवहितास्मि ।

**प्रथमा**–हंजे एवं खु अहं तुमं विअ पुणो णिव्वंधिअ पुच्छंति पिअसहीए भणिदम्हि कलावईए जह सहि कोमुदीए पुव्वं खु वसंतदोलारोहणदिणे कामदेवघरब्भंतरे दिट्ठो भट्टदारिआए भट्टा रामो पुणो अ माहविवणे अप्पम्हि उक्कंठंतो दिट्ठो सो एव्व दाणिं भट्टिदारिआए संदावहेउत्ति ।

**द्वितीया**–हेला जुंजइ ।

**प्रथमा**–हेला किं दाणिं अम्हे भट्टिदारिआपासं गच्छेमो आदु चंदअंतधाराघर एव पडिवालेमो ।

**द्वितीया**–एव्वं खु अहं पिअसहिए भणिदह्मि विणीदाए जह सहि सुउमारिए बहुजणपलावं ण सहइ सीसवेअणादिरेअदो भट्टिदारिआ ता सहिअणंपि सव्वं पमअवणदुवारे एव्व णिसिहेहित्ति ।

**प्रथमा**–तेणं हि तुमं तं णिओअं अणुचिट्ठ, अहं पि सज्जीकअं धाराघरअं भट्टिदारिआए णिवेदेमि ।

**द्वितीया**–सहि तह ।

( निष्क्रांते )

---

१. सखि एवं खलु अहं त्वामिव पुनर्निबंध्य पृच्छंती प्रियसख्या भणितास्मि कलावत्या यथा सखि कौमुदिके पूर्वं खलु वसंतदोलारोहणदिने कामदेवगृहाभ्यंतरे दृष्टो भर्तृदारिकायाः भर्ता रामः । पुनश्च माधवीवने आत्मनि उत्कंठमानो दृष्टः स एवेदानीं भर्तृदारिकासंतापहेतुरिति । २ सखि युज्यते । ३ सखि किमिदानीमावां भर्तृदारिकापार्श्वे गच्छाव अथवा चंद्रकांतधारागृहे प्रतिपालयावः । ४ एवं खल्वहं प्रियसख्या भणितास्मि विनीतया यथा सखि सुकुमारिके बहुजनप्रलापं न सहते शीर्षवेदनातिरेकतः भर्तृदारिका तस्मात्सखिजनमपि सर्वं प्रमदवनद्वारे निषेधयेति । ५ तेन हि त्वं तं नियोगमनुतिष्ठ अहमपि सज्जीकृतं धारागृहं भर्तृदारिकाया निवेदयामि । ६ सखि तथा ।

( ततः प्रविशति सीता विनीता चेटी च। )

**सीता**–हंजे कोमुदीए किं साहु सज्जिअं चंदअंतधाराघरअं।

**चेटी**–किं ण सज्जीकरेइ चंदअंतधाराघरअं कोमुदीआ।

**विनीता**–हेला साहु भणिअं जाव तुमं गदुअ जह भट्टिदारिआ सीसवेअणं सुणिअ ण किलम्मइ भट्टिणि वसुहा जहि तहि वा विहारावदेसणिवेदणेण अणिव्विण्णं करेहि।

**चेटी**—जं पिअसहि भणादि। ( निष्क्रांता )

**विनीता**—इदो इदो भट्टिदारिआ।

( उभे परिक्रामतः )

**विनीता**—एअं पमदवणं जाव पाविसम्ह।

( उभे प्रविशतः )

**सीता**—( विचिंत्य ) पिअसहि किं इमो अम्हाणं उज्जोवो कदाइअमोहो आदु हिअअस्स एस मोहो।

**विनीता**—भट्टदारिअं एवं णिउज्जंतो मअणो भट्टिणंपि तुरिदं तुह पाहुडिअं कुणइ।

**सीता**—सहि दुस्सहं खु तवइ चंदादवो जाव एअं परिहरंतिअ इमाए

---

१ सखि कौमुदिके किं साधु सज्जितं चंद्रकांताधारागृहं। २ किं न सज्जीकरोति चंद्रकांतधारागृहं कौमुदिका। ३ हला साधुभणितं यावत्त्वं गत्वा यथा भर्तृदारिका शीर्षवेदना श्रुत्वा न क्राम्यति भट्टिनी वसुधा यत्र तत्र वा विहारापदेशनिवेदनेन अनिर्विण्णा कुरु। ४ यत् प्रियसखी भगति। ५ इत इतो भर्तृदारिका। ६ एतत्प्रमदवनं यावत्प्रविशामः। ७ प्रियसखि किमियमस्माकद्योगः कदाचिदमोघो अथवा हृदयस्यैप मोहः। ८ भर्तृदारिकामेवं नियुंजन् मदनः भर्तारमपि त्वरितं तव प्राघूर्णिकं करोति। ९ सखि दुस्सहं खलु तपति चंद्रातपो यावदेनं परिहृत्य अस्याः पृच्छायाया बकुलवाटिकायाः छायां गच्छामि।

पच्छाआए वउलवाडिआए च्छाहिं गच्छेमि (तथा परिक्रम्य) सहि सो एव्व वरं चंदादओ एत्थ खु उवरि णिवडंतेहिं कुसुमवाणविजयबाणेहिं विज्झेदि वउलकुसुमेहिं मे सरीरं ।

विनीता—( अग्रतो निर्दिश्य ) एअं चंदअंतधाराघरअं जाव पविसम्म

सीता—सहि तह ।

( प्रविशतः )

विनीता—भट्टिदारिए एअं सव्वदो सज्जीकआसिसिरोवआरं णिस्सदजंतधारासहंसं चंदअंतधाराघरअं एसा अ एत्थ तमालपल्लवसज्जा । जाव इदं एव्व तुह संताओ अवणिज्जदु ।

सीता—जं पिअसहि भणादि । ( उपविश्य ) हंजे विणीदे एताइ तमालदलाइ दलंतीव हिअअं उम्हाअताए ।

विनीता—तेण हि इमाइ चंदणपल्लवरसेण सिंचेमि । (तथा करोति )

सीता—हंजे णिप्पीडिदं विअ चंदणपल्लवेहिं सह मे हिअअं ।

विनीता—जाव इमाए गंधणीहारेण सिंदाए जलंद्दाए वीजेमि । ( तथा करोति )

सीता—हला गंधणीहारसेअदो सिण्णं मे सरीरं ।

१ सखि स एव वरं चंद्रातपः अत्र खलूपरि निपतद्भिः कुसुमबाणविजयबाणैः विध्यते बकुलकुसुमैः मे शरीरं । २ एतच्चंद्रकांताधारागृहं यावत्प्रविशामः । ३ सखि तथा । ४ भर्तृदारिके एतत्सर्वतः सज्जीकृतं शिशिरोपचारं निष्यंदयन् यंत्रधारासहस्रं चंद्रकांतधारागृहं एषा चात्र तमालपल्लवशय्या । यावदित एव तव संतापमपनयतु । ५ यत् प्रियसखी भणति । ६ हंजे विनीते एतानि तमालदलानि दलंतीव हृदयं औष्मलतया । ७ तेन हि इदानीं चंदनपल्लवरसेन सेचयामि । ८ हंजे निष्पीडितमिव चंदनपल्लवैस्सह मे हृदयं । ९ यावदनया गंधनीहारेण स्निग्धया जलार्द्रया वीजयामि । १० हला गंधनीहारसेकात् शीर्णं मे शरीरं ।

**विनीता**—( स्पृष्ट्वा ) कहं एसो गंधणीहारो से दुब्भेद्दो परिणदो जाव इमेहिं कप्पूरचुण्णेहिं पडीकरेमि । ( तथा करोति ) ।

**सीता**—हंजे चुण्णोदि मे हिअअं कप्पूरचुण्णं ।

**विनीता**—तेण हि इमिणा मोत्तापलक्खोदसह्लित्थेण केलिपत्तेण वीजामि ( तथा करोति )

**सीता**—हला एअं मोत्तिअखोद्दधवलिअधारं केलिपत्तं असिपत्तं विअ अणंगस्स उल्लसंतं पेक्खंति भाआदि मे आदा ता जाव तं अण्णदो विक्खिव अहव मा खु तं मुंच एसो खु जंतणिवडंतचंद्रअंतणीसंदमंदहुंकारमुच्छिदो मं दाणिं मंदाणिलहदवो जाव तेण कअलीपत्तेण एअं मलआणिलं पडिवीजंती अण्णदो ओसरेहि ।

**विनीता**—कहं एस णिवारिज्जइ सदागई जाव इमिणा चंदअंतणिस्संदपलाविदेण कल्हारदलेण तुवं वीजेमि । ( तथा करोति )

**सीता**—हंजे चंदअंतणिस्संदावदेसेण णिस्संदहि मे हिअअं जाव कमलिणीपत्ताइ समप्पेंति पडिअवच्छावेदि ।

---

मिवानंगस्योल्लसत् पश्यंत्याः बिभेत्यात्मा तस्माद्यावत्तदन्यतो विक्षिप । अथवा मा खलु तन्मुंच एष खलु यंत्रनिपतच्चंद्रकातानिष्यंदमंदहुंकारमूर्च्छितो मूर्छयति मामिदानीं मंदानिलहतकः यावत्तेन कदलीपत्रेणैतं मलयानिलं प्रतिवीजंती अन्यतोऽपसारय । ५ कथमेष निवार्यते सदागतिः यावदनेन चंद्रकातनिष्यंदप्रक्षालिनेन कल्हारदलेन त्वा वीजयामि । ६ हंजे चंद्रकातनिष्यंदापदेशेन निष्यंदते मे हृदयं यावत्कमलिनीपत्राणि समर्पयती पर्यवस्थापय ।

विनीता—(तथाकुर्वती) कहं मुणालिणीपत्ताइ अधिगमिअ अंगहत्थोवि मे उम्महाविज्जई। जाव संदावसुक्खपेरंताइ सिंचेमि मुणालिणीपत्ताइ एलादलरसेण। अहव ताइ सूसाइ मुणालिणीपत्ताइ परिच्चइअ चंदकलाकोमलाइ मुणालाइ इमिए अंगेसु समप्पेमि। (तथाकरोति)

सीता—हला एआइ विसकंदाइ सच्चं विसकंदाइ।

विनीता—किं दाणिं करेमि होदु जाव इमाए अंगेसु मरिआइ एआइ सकुसुमाइ उप्पलकुसुमकंदाइ समप्पेमि। (तथा करोति)

सीता—हंजे एदे खु णं उप्पलकुसुमकंदा कुसुमबाणस्स कंदा ता किं तुए करिअदि।

विनीता—कहं विदेहोवि सअं दड्ढमम्महो दहइ अअं विदेहपुत्ति (सचिंतं) हं किं करिस्सं होदु जाव एदाइ मोत्तिअसराइ सतप्पेंती लघुकरेमि इमाए संदावं। (तथा करोति)।

सीता—हला विणीदे एदे खु सरा सरा एव्व मम्महस्स।

विनीता—भट्टदारिए पेक्ख दाव देक्खामहुरं कोमुदी गअणगंगं उड्डुवेण व्वेअ अलंकरिज्जंतं उड्डुवेण।

---

१ कथं मृणालिनीपत्राणि अधिगम्यागृहस्तोपि मे धौम्मायते यावत्सन्तापशुष्कपर्यंतानि सिंचयामि मृणालिनीपत्राणि एलादलरसेन। अथवा तानि शुष्काणि मृणालिनीपत्राणि परित्यज्य चन्द्रकलाकोमलानि मृणालानि अस्या अंगेषु समर्पयामि। २ हला एतानि बिसकन्दानि सत्यं विषकंदानि। ३ किमिदानीं करोमि भवतु यावदस्या अंगेषु भरितानि एतानि सकुसुमानि उत्पलकुसुमकांडानि समर्पयामि। ४ हंजे एते खलु ननूत्पलकांडा- कुसुमबाणस्य कांडा तस्मात्त्वया किं क्रियते। ५ कथं विदेहोऽपि स्वयं दग्धमन्मथ दहत्ययं विदेहपुत्री। ६ अहं किं करिष्यामि भवतु यावदेतान् मौक्तिकहारान् सतर्पयंती लघूकरोमि अस्याः संताप। ७ हला विनीते एते खलु शराः शरा एव मन्मथस्य। ८ भर्तृदारिके पश्य तावत् प्रेक्षामधुरां कौमुदीं गगनगंगां उडुपेनेवालंक्रियमाणां उडुपेन।

सीता-हैला इमस्सिं अवारे चंदिकासमुद्दे मज्जंतं अलद्धुच्छासं अप्पाणं धारेदुं ण पारेमि ।

विनीता-हैद्धि हाद्धि ।

सीता-सहि सव्वंवि सहिदुं सक्कत एस पुण अणण्णसाहारणं खु मोहेइ मं चंदमोहो ।

विनीता-( सखेदं ) कहं हरिणी वेघेण विअ चकोरिए चंडादवेण विअ चंदादवेण संधुक्खिदो इमाए संदावो ।

सीता-( संतापमभिनीय ) संदावस्स तवति पडिआरो जइ खु कोमुदी एव्व सहि भण्णए एत्थ अण्णो पडिआरो कोमुदी एव ।

विनीता—भट्टिदारिए दक्ख एदं खु गअणगंगाए सुरदंतिदंतवलिहाघादेण अंतारुभिण्णा दीमिवट्टं विअ विभाइ पवट्टिअकोमुदीणिम्मलजलपवाहविक्खित्तणक्खत्तबुब्बुदजालं अमअमऊखबिंबं ।

सीता—हैला एअं चंदहदअं णिज्झाअंतीए चंदअंतोवलं विअ मे लोअणजुअलं होलजलाविलं ।

विनीता—तेण हि मुणालहारपत्तबंधं जलपेडलं अच्छिसु कपोलेसु थणेसु अ समेप्पति अदिवाहेहि परिदावं ( उपनयति ) ।

---

१ हला अस्मिन्नपारे चंद्रिकासमुद्रे मज्जंतमलब्धोच्छ्वासमात्मानं धर्तुं न पारयामि। २ हा धिक् हंत । ३ सखि सर्वमपि सोढुं शक्यते एष पुनरनन्यसाधारणं खलु मोहयति मां चंद्रमयूखः । ४ कथं हरिणी व्याधेनेव चकोर्याः चंडातपेनेव चंद्रातपेन संधुक्षितः अस्याः संतापः । ५ संतापस्य तपति प्रतीकारो यदि खलु कौमुद्येव सखि भण्यतेऽत्र अन्यः प्रतीकारः कौमुद्येव । ६भर्तृदारिके पश्य एतच्च खलु गगनगंगायाः सुरदंतिदंतपरिघाघातेनांतरुद्भिन्नं छिद्रवृत्तमिव विभाति प्रवर्तितकौमुदीनिर्मलजलप्रवाहविक्षिप्तनक्षत्रबुद्बुदजालममृतमयूखबिंबं । ७ हला एतं चंद्रहतकं निध्यायंत्याः चंद्रकांतोपलमिव मे लोचनयुगलं बहलजलाविलं । ८ तेन हि मृणालहारपत्रबंधजलपत्रकं अक्षिषु कपोलेषु स्तनेषु च समर्पयंती अतिवाहय परितापं ।

सीता—( आदाय तथाकृत्वा ) हलाँ दाणिं खु मे अहिअं उग्गलंति अच्छिणीवाहं वाहं च ।

विनीता—हंद्धि ।

सीता—सहि तं करेहि मे सीसव्वेअण्णपडिकरिअं ।

विनीता—तेण हि चंदणलल्लाडिअ रचयेमि । ( तथा करोति ) ।

सीता—सहि सअं विअ सीसवेअणा एस गोसीसलेओ ।

विनीता—भट्टिदारिए एअं विसतंतुदुउलवासिणीं मुणालाभरणदारिणीं दिण्णचंदणचच्चकीं केसरकिअत्थासअं मालदिमालधारिणीं आमुक्कमल्लिआमउलभारं णोमालिआमालिआमेहलं चंदअंतपुत्तिअं आलिंगंती संदावं ते उद्धणाहि ।

सीता—हैला सुट्ठु भणिअं ( तथाकृत्वा ) सहि चंदअंतपुत्तिए किं मइत्तोवि अहिअद्दरं तुइ णिद्दओ एस मम्महहदवो । जेण तुवं वि एवं णाम परिकरासिसिरोवआरा एआरिसं संदावं उव्वहेसि ।

विनीता—भट्टिदारिए सिसिरोवआरो सु ण दे सिसिरोवआरो मण्णे सिसिरोवआरमोअणं व दाणि सिसिरोवआरोत्ति ।

---

१ हला इदानीं खलु मे अधिकं दलंति अक्षिणीवादं बाष्पं च । २ हा धिक् । ३ सखि तत्कुरु मे शीर्षवेदनाप्रतिक्रिया । ४ तेन हि चंदनलल्लाटिकां रचयामि । ५ सखि स्वयमिव शीर्षवेदनेपगोशीर्षलेपः । ६ भर्तृदारिके एतां विसतंतुदुकूलवासिनीं मृणालाभरणधारिणीं दत्तचंदनचर्चिकया केसरकृतस्थासकां मालतीमालाधारिणीमामुक्तमल्लिकामुकुलभारां नवमालिकामालिकामेखलां चंद्रकांतपुत्रिकामालिंगंती संतापं ते उद्धेतु । ७ हला सुष्ठु भणितं । ८ सखि चंद्रकांतपुत्रिके किं मत्तोपि अधिकतरं त्वयि निर्दयो मन्मथहतकः येन त्वमपि एवं नाम परिकृतशिशिरोपचारा एतादृशं संतापमुद्वहसि । ९ भर्तृदारिके शिशिरोपचारः खलु न ते शिशिरोपचारः मन्ये शिशिरोपचारमोचनमेवेदानीं शिशिरोपचार इति ।

**सीता**––हंजे किं करेमि सव्वदोवलग्गं मअणसरासरो सरधि विअ खु मे आदा कुसुमाउहस्स ।

**विनीता**—को अण्णो एसो आदा सरहि एव्व ( इत्यर्धोक्ते )

**सीता**—( सहर्षं ) कहिं कहिं अज्जउत्तो ।

**विनीता**—भट्टदारिए एवं खु अहं वत्तुकामो को अण्णो एसो आदा सरहि एव्व दे आउंखणिमग्गपुप्फाउहवाणसहस्सोत्ति ।

**सीता**––हंतें कुदो मे तारिसा भाअदेआ जेण दाणिं अज्जउत्तो सअं आअहुअ *अच्छीणं* मे ऊसवं देइ ।

**विनीता**—भट्टिदारिए मा खु तह संतप्पिअ अवस्सं खु पिअसहि कलावई ण दे अण्णहा भणाइ त्ता एत्थ पविट्ठ एव्व जाणिहि भट्टिणिआ वइदो मुहुत्तअं पडिवालेम ।

( ततः प्रविशति रामो विदूषकश्च )

**रामः**—

**ततध्योमा तपनकिरणैः वासरस्तु प्रकामं**
**संतापानां भवतु विषयो दुःसहानाममीषाम ।**
**सः स्यात्तस्यां निशि च शशिनो ज्योत्स्नया शीतलायां**
**चित्रं जातो द्विगुणितगुणो हंत संताप एषः ॥ १ ॥**

---

१ हंजे किं करोमि सर्वतोवलग्नं मदनशरासारः शरधिरिव खलु मे आत्मा कुसुमायुधस्य । २ कोऽन्यः एष आत्मा शरधिरेव । ३ कस्मिन् कस्मिन् आर्यपुत्रः । ४ भर्तृदारिके एवं खल्वहं वक्तुकामा कोन्य एष आत्मा शरधिरेव ते आपुंखनिमग्नपुष्पायुधबाणसहस्र इति । ५ हंत कुतो मे तादृशानि भागधेयानि येनेदानीमार्यपुत्रः स्वयमागत्य अक्ष्णोर्मे उत्सवं ददाति । ६ भर्तृदारिके मा खलु तथा संतप्य अवश्यं खलु प्रियसखिकलावती न तेऽन्यथा भणति तस्मादत्र प्रविष्ट एव जानीहि भट्टिन्या वदितो मुहूर्तं प्रतिपालयामः ।

विदूषकः—भो वअस्स पेक्ख पेक्ख मअरद्धअविजअरज्जाहिसेअसलिलप्पवाहस्स विअ सोहग्गं जोह्णापूरस्स ।

रामः—( निर्वर्ण्य ) हत शोचनीयाः खलु विरहिणः । ते हि

प्रसर्पन्तीं ज्योत्स्नां मदनविजयारम्भरभसा
प्रमर्दोत्थां धूलिं किल वियति पश्यन्ति विधुराः ।
किमन्यं मन्यन्ते मलयगिरिवातांश्च पवनान्
सकोपं प्रोन्मुक्तान्यममहिषशूत्कारमरुतः ॥ २ ॥

विदूषकः—वअस्स किं ण णिव्वावेदि तुह हिअअं एसा णीहारबिन्दुकोमला कण्ठावलम्बिणी हारलदा ।

रामः—वयस्य मैवं पश्य ।

न सोऽयं शीतांशुर्जरठतपनस्तो रविरसौ
न चैषा ज्योत्स्नाया शिरसि सुहृदस्तापशिखा ।
न चैते हारा यत्तरणिमणिमाला स्फुटमिमा
न चेदंगान्येव प्रियसख तपेयुः कथमिव ॥ ३ ॥

विदूषकः—हंत कहं एसो वड्ढेदि सदाव वअस्सस्स वल्लवंधुकुमुदिणीवधू ।

रामः—वयस्य आदेशय मार्गं प्रमदवनस्य ।

विदूषकः—एअं उत्तरदो माहविवणं एसा अ इमस्स दक्खिणदो पुप्फवाडिआ जाव इमाणं अंतरेण गच्छम्ह ता इदो पिअवअस्सो ।

( परिक्रामतः )

१ भो वयस्य पश्य पश्य मकरध्वजविजयराज्याभिषेकसलिलप्रवाहस्येव सौभाग्यं ज्योत्स्नापूरस्य । २ वयस्य किं न निर्वापयति तव हृदयं एषा नीहारबिंदुकोमला कण्ठावलंबिनी हारलता । ३ हंत कथमेष वर्धयते संतापं वयस्यस्य मल्लबंधुकुमुदिनीवधुः । ४ एतदुत्तरतो माधवीवनं एषा चास्य दक्षिणतो पुष्पवाटिका यावदनयोरन्तरेण गच्छाव तस्मादित प्रियवयस्य ।

रामः–( मदनावस्थां नाटयन् )।

निःशेषानद्य यूयं पिबत विनिपतच्चंद्रपादांश्चकोरा
हे राहो व्यात्तवक्त्रः सकलमपि गिल त्वं सुधासूतिबिंबम्।
वाताश्चूतैनान्मलयजफणिनश्चंदनामोदसांद्रान्
गृण्हीत ज्या द्विरेफा मधुपपितमुचः कौसुमान् कामबाणान्॥ ४॥

( विचिंत्य ) अलमनया केवलमशोधितमूलया बहिर्जल्पलीलया। तदिदानीं मन्मथमेव मूलमनुशिष्मः। ( आकाशे लक्ष्यं बद्ध्वा )

मनसिज विषयांस्तांस्त्वं मनस्विप्रणिधान्
जहिहि न हि गुणस्ते तेषु संसर्ग एषः।
न चरितमथवाहो तेऽन्यथा कर्तुमर्हं
भवति च मधुपानां यद्गुणस्ते गुणाय॥ ५॥

विदूषकः—वअस्स एदं पमदवणपच्छिमदुवारअं।

रामः—यावत्प्रविशावः।

( प्रविशतः )

विदूषकः—वअस्स णिव्विसेहि एअं जोण्हापूरतरंगं मं विअ सुहसिसिरपरिसं पओसाणिलं।

रामः—

तामिस्र एष पवनो विरहिजनोत्पातपांशुवृष्टिरिव।
उत्फुल्लकैरवरजो धूसरितस्त्वमपहरति॥ ६॥

विदूषकः—वअस्स एसा खु सा तमालवीहिआ।

रामः–( निर्वर्ण्य ) वयस्य पश्य।

---

१ वयस्यै तत्प्रमदवनपश्चिमद्वारं। २ वयस्य निर्विश एत ज्योत्स्नापूरतरंगं मामिव सुखशिशिरस्पर्शं प्रदोषानिलं। ३ वयस्य एषा खलु सा तमालवीथिका।

प्रच्छायरम्यासु तमालवास-
यष्टिष्वसौ बर्हिगणः शयानः ।
ज्योत्स्नालवैः पल्लवरध्रदृष्टै-
र्विभाव्यते मेचकबर्हभारः ॥ ७ ॥

विदूषकः—( निर्दिश्य ) वेअस्स एअं खु तं पल्लदकआलिखमतोरण-रमणिज्जं धाराघरेअदुवारअं ।

रामः—( निर्वर्ण्य सस्पृहं )

शीतः कपोलार्पणदानयोग्य-
श्चंद्रातपस्यच्छदुकूलवासी
प्रियोरुसाम्याद्विददाति रंभा-
स्तंभो ममासौ परिरंभवांछाम् ॥ ८ ॥

विदूषकः—माँ तुवं उवमामेत्ते उक्कंठेहि उवमेअं चेअ दाणि लहसि ।

रामः—तथास्तु ।

विदूषकः—वैअस्स वक्स दाव जोहणीसवण्णं परिसाणमेअं चंद-अंतणिस्संदपादं ।

रामः—वयस्य सम्यगुपलक्षितं । तथाहि ।

चंद्रोपलानां शुचिचंद्रकांता
निर्याणधारा गृहहर्म्यपृष्ठात् ।
निष्यंदधारा स्रवती प्रणाल्या
सुरस्रवंतीव हिमाचलाग्रात् ॥ ९ ॥

विदूषकः—अंहो से सिरिअं ।

---

१ वयस्य एतत्खलु तत् प्रस्टक्कदलिस्तंभतोरणरमणीयं धारागृहद्वारं । २ मा त्व-मुपमामात्रे उत्कंठस्व उपमेयमेवेदानीं लभसे । ३ वयस्य पश्य तावत् ज्योत्स्नास-वर्णं स्पर्शानुमेयं चंद्रकांतनिष्यंदपादम् । ४ अहो अस्याः स्थैर्यं ।

**रामः**—वयस्य यावत्प्रविशावः ।

**विदूषकः**—इदो दाव ।

( उभौ प्रविशतः )

**विदूषकः**—( दृष्ट्वा ) वँअस्स एसा खु अत्तहोदि सीदा विणीदासहिदा तुमं पडिवालेदि ।

**रामः**—( विलोक्य निर्वर्ण्य च ) ।

समन्मथा मत्प्रतिपालनोत्सुका
मनोरथानां कुरुते परां धृतिम् ।
विवेपयंती परितापितां तनुं
तनूदरीयं तनुते शुचं च मे ॥ १० ॥

**विदूषकः**—पिअँवअस्स एहि उवसप्पम्ह ।

**रामः**—वयस्य ममेदानीं तव सख्याः सीतायाः मन्निबंधनं विविक्त-संजल्पं श्रोतुं च सकौतुकं चेतः ।

**विदूषकः**—तेणं हि एत्थ एव्व मुहुत्तअं चिट्ठम्हो ।

**रामः**—सम्यगाह भवान् ।

( उभौ तथा कुरुतः )

**सीता**—( सनिर्वेदं ) हलाँ विणीदे किं इमिणा अलद्धफलेण पडिवालणेण ।

**विनीता**—भाट्टिदारिए मा तुवं सोइअ जह तुमं माहविवणे समस्सा-

१ इतस्तावत् । २ वयस्य एषा खलु अत्रभवती सीता विनीतासहिता त्वां प्रतिपालयति । ३ प्रियवयस्य एहि उपसर्पावः । ४ तेन हि अत्रैव मुहूर्तं तिष्ठावः । ५ हला विनीते किमनेनालब्धफलेन प्रतिपालनेन । ६ भर्तृदारिके मा त्वं शोचयित्वा यथा त्वं माधवीवने समाश्वसिता तत्कालसान्निहितेन भर्त्रा रामेण तथेदानीमपि स त्वां समाश्वासयिष्यति ।

सिदा तक्कालसण्णिहिदेण भट्टिणा रामेण तह दाणिंवि सो तुमं सम स्सासइस्सिदि ।

**सीता**—[१]को वा अदोवि परं समस्सासणकालो ।

**विनीता**—( आत्मगतं ) [२]जांव भट्टा आअच्छेदि दाव भट्टिदारिअं अणुऊलेण कीलावदेसेण विणोदेमि ( प्रकाशं ) [३]भट्टिदारिए जाव माहवि-वणउत्तंतं अभिणअंतीए कंपि वेलं अदिवाहेमो ।

**सीता**—[४]हला साहु भणिअं ।

**विनीता**—[५]तेणें हि अहं भट्टा रामो होमि तुमं पुण भट्टिदारिआ चेअ होहि ।

**सीता**—[६]हला जुत्तं आचक्खिअं ।

**विदूषकः**—[७]वअं पुप्फगंधिआ पउत्ता ।

**रामः**—वयस्य निभृतमवलोकयामः ।

**विनीता**—( रामभूमिकां गृहीत्वा मदनावस्थामभिनीय ) अहो मक-रकेतनस्य [८]रणरणिकशालिता ।

कुसुमवृष्टिरसौ कुसुमेषुना
कुसुमचापधरेण निपातिता
विजयिनः पुनरस्य निपातिता
कुसुमवृष्टिरभूज्जयशंसिनी ॥ ११ ॥

---

१ को वा अतोपि परं समाश्वासनकाल । २ यावद्भर्तागच्छति तावद्भर्तृदारिकाम-नुकूलेन क्रीडापदेशेन विनोदयामि । ३ भर्तृदारिके यावन्माधविवनवृत्तान्तमभिनयन्त्यः कामपि वेलामतिवाहयामः । ४ हला साधु भणितं । ५ तेन हि अहं भर्ता रामो भवामि त्वं पुनर्भर्तृदारिकैव भव । ६ हला युक्तमाख्यातं । ७ वयं पुष्पगं-धिका प्रवृत्ता । ८ रणप्राचुर्यशालिता ।

**सीता**—( श्रुत्वा सखेदमिव ) हतें किं ताए इति मं विहत्थेह । हंजे कि दाणि एत्थ थीयदि ता गच्छम्ह अहव कहिं दाणि मए गच्छिअदि । ( मोह नाटयति ) ।

कृतकराम —( कर्ण दत्वा ) कथं स्त्रीजनसमाश्वासशब्द ।

**रामः**—( सहसोपसृत्य संज्ञया विर्नातां विनिवार्य ) प्रिये समाश्वसिहि समाश्वसिहि ।

—( समाश्वास्य दृष्ट्वा च सहर्ष सलज्जं चात्मगतं ) कंहं सअ
ने अज्जउत्तो । ( गंतुमिच्छति ) ।
ते गृहीत्वा ) अयि मुग्धे ।

**विदूषकः**—कहं इमाए कुंभदासीए जोरिओ वअस्सस्स सिणिद्धं धीरो सरो उदार च सत्तं ।

**राम.**—संगीतकविदग्धा हि प्रायो राजकुलपरिचिता स्त्रियः ।

**सीता**—( आकाशे ) हला विणीदे अविदिअभावे तस्सिं जणे कहं ण लज्जेदि मे उक्कंठा । किं भणासि मा संतप्पिअ तंपि तुमं विअ उक्कंठं तं चेअ दक्खिस्सिस्सिति ।

**कृतकरामः**—( आकाशे ) वयस्य गार्ग्यायण किं ब्रवीषि कियद्वा तत्कालः प्रतिपालयितव्यः यस्मिन्नेष सतापः शाम्यति इति ( सस्मितं ) वयस्य न दुर्जातं श्रूयतां । शरदृतुको न तृप्यति कलहंसः शरदि विप्रकृष्टाया सीतार्थिनोपि ननु मे न धृतिस्तस्यामदृष्टायां ।

**सीता**—हलां विणीदे किं भण्णसि दक्ख दाव एसो खु पुरदो भट्टा रामोत्ति तेण हि कियट्ठं मे चक्खू । ( दृष्ट्वा ) अम्हो अज्जउत्तो ।

**कृतकरामः**—( आकाशे ) वयस्य किं ब्रवीषि । इदमत्राश्चर्यं यदुपहसितताखिलशिशिरोपचारस्य भवतस्तत्रभवति शैशिर्यमापादयतीति ( सनिर्वेदं तूष्णीमास्ते ) ।

**सीता**—( आकाशे ) हैला किं भणासि किं दाणिं तुस्ससित्ति ।

**कृतकरामः**—( आकाशे ) वयस्य किं ब्रवीषि अपृष्टेनापि त्वया सीतां प्रजल्पतः कुतः खलु पृष्टेनापि न सीताप्रसंगे वीयते प्रत्युक्तिरीति ( सनिवर्त्तं ) किं तया ।

---

१ कथमनया कुभदास्या चोरितो वयस्यस्य स्निग्धो धैर्य• स्वर उदारं च सत्वं । २ हला विनीते अविदितभावे तस्मिन् जने कथं न लज्जसे मे उत्कठा । किं भणसि मा संतप्य तमपि त्वमिवोत्कंठमानेमेव द्रक्ष्यसीति । ३ हला विनीते किं भणसि पश्य तावत् एष खलु पुरतः भर्ता राम इति तेन खलु कृतार्थं मे चक्षुः । ४ अहो आर्यपुत्रः । ५ हला किं भणसि किमिदानीं तुष्यसीति ।

**सीता**—( श्रुत्वा सखेदमिव ) हंतं किं ताए इति मं विहत्थेइ । हंजे किं दाणि एत्थ थीयदि ता गच्छम्ह अहव कहिं दाणि मए गच्छिअदि । ( *मोहं नाटयति* ) ।

**कृतकरामः**—( कर्णं दत्वा ) कथं स्त्रीजनसमाश्वासशब्दः ।

**रामः**—( सहसोपसृत्य संज्ञया विनीतां विनिवार्य ) प्रिये समाश्वसिहि समाश्वसिहि ।

**सीता**—( समाश्वास्य दृष्ट्वा च सहर्षं सलज्जं चात्मगतं ) कहं सअं च्चेअ परमत्थदो अज्जउत्तो । ( गंतुमिच्छति ) ।

**रामः**—( हस्ते गृहीत्वा ) अयि मुग्धे ।

कृतव्यलीके प्रतिकूलया गिरा
मयि त्वया कोपरसोऽनुभावितः ।
विकुंचितं भ्रूलतिकं तदीक्षणं
क्षिप स्मरस्येदमपश्चिमं शरम् ॥ १२ ॥

**विनीता**—( विलोक्य ) कहिं एअं वालचंदणतरुमूलालवालपरिपूरितिवण्णं विलंघेइ चंदअंतदवपूरो जाव अण्णदो एअं पवट्टेमि ।

**विदूषकः**—होदि सिग्घं संविहेअं खु तं जाव वालासोअमूले पवट्टेदव्वं अहं पि दे सहाओ होमि ।

( निष्क्रांता विनीता विदूषकश्च )

**सीता**—कहं पिअसहिवि एक्काइणिं मं परिच्चिइअ गआ ।

---

१ हंत किं तयेति मा विहस्तयति । हंजे किमिदानीमत्र स्थीयते तस्माद्गच्छाव अथवा कस्मिन्निदानीं गम्यते । २ कथं स्वयमेव परमार्थतः आर्यपुत्रः । ३ कथमेतं वालचंदनतरुमूलालवालपरिपूरितवप्रं विलंघयति चंद्रकांतद्रवपूरो यावदन्यतो एतत्प्रवर्तयामि । ४ भवति शीघ्रं संविधेयं खलु यावद्वालाशोकमूले प्रवर्तितव्यमहमपि ते सहायो भवामि । ५ कथं प्रियसखी मामेकाकिनीं परित्यज्य गता ।

**रामः**—नन्वयमहं ते परिजननिर्विशेषः संनिहितः ।

**सीता**—( लज्जां नाटयति, अन्यतो गंतुमिच्छति )

**रामः**—हस्ते गृहीत्वा निवारयन् ।

चिरस्य कालस्य समागते जने
तवाद्य विंबोष्ठि समागमोत्सुके ।
प्रसिद्धयुक्तं विनिगूहनं न ते
सुनिर्दयं चंडि कुरूपगूहनम् ॥ १३ ॥

**सीता**—( अवस्थोचितं नाटयति ) ।

**रामः**—( आत्मगतं ) असाधारणरमणीयं खलु नववधूविहृतं । तथाहि ।

कथमपि परिरब्धा यात्यसौ पश्यतो मे
मयि पुनरधरोष्ठं पातुकामे प्रसह्य ।
सकरुणमुपलाल्यं निर्दयं चाशु पेयं
प्रथयति मुखमंतर्बाष्पजिह्माकुलाक्षम् ॥ १४ ॥

**विनीता विदूषकश्च**—( सत्वरं प्रविश्योपसृत्य च ) आअच्छइ एत्थ एक्का इत्थिआ ता किं करिदुं ।

**विनीता**—भट्टा तुम्हेहि एत्थ अंतरिदेहि होदव्वं ।

**रामः**—यथाह भवती ।

( तथा तिष्ठत· )

( प्रविश्य )

**चेटी**—जेदु भट्टिदारिआ ।

**सीता**—सहि कोमुदिए कुदो आअच्छसि ।

---

१ आगच्छति अत्रैका स्त्री तस्मात्किं क्रियताम् । २ हे भर्तः युष्माभिरत्रान्तरितैर्भवितव्यं । ३ जयतु भर्तृदारिका । ४ सखि कौमुदिके कुत आगच्छसि ।

चेटी—भट्टिदारिए एव्वं खु भट्टिणिए वसुहाए अहं आणत्ता जह होदि कोमुदीए को कालो पमदवणे विहारत्थं गआए वच्छाए सीदाए सीसवे-अणत्ति अ सुअं मए परिअणादो ता तुमं सिग्घं गडुअ तं इद आणेहि त्ति ता जह भट्टिणि ण किलम्मइ तह भट्टिदारिआ सिग्घं गंतव्वं ।

सीता—हं संकडे पडिअम्हि ।

विनीता—भट्टिदारिए तेण ही सिग्घं गंतव्वं ।

सीता—( आत्मगतं ) हं अविणीदा खु विणीदा ( प्रकाशं ) जं पिअंसहि भणादि ।

चेटी–इदो इदो भट्टिदारिआ ।

( परिक्रम्य निष्क्रांता सीता विनीता चेटी च )

रामः —( सोत्कंठं ) अहो दुस्सहता प्रियाविरहस्य । अत्र हि ।

अच्छिन्नपंक्तिशरसंधिकृताभिसंधि
पुष्पायुधस्य परितोपि विनिःपतंति ।
गुंजत्फलानि विरहार्तविपत्फलानि
कुर्वन्त्यलं सुमनसो विमनस्कतां नः ॥ १५ ॥

विदूषकः—वअस्स समासण्णो दिअहारंभो अज्ज खु वारुणिदिसं वो-

१ भर्तृदारिके एवं खलु भट्टिन्या वसुधयाहमाज्ञप्ता यथा कौमुदिके क कालः प्रमदवने विहारार्थे गतायाः सीताया वत्सायाः शीर्षवेदना इति च श्रुतं मया परिजनात् तस्मात्त्वं शीघ्रं गत्वा तामित आनयेति तस्माद्यथा भट्टिनी न क्लाम्यति तथा भर्तृदारिकया शीघ्रं गंतव्यं । २ अहं संकटे पतितास्मि । ३ भर्तृदारिके तेन हि शीघ्रं गंतव्यं । ४ अहो अविनीता खलु विनीता । ५ मत् प्रियसखी भणति । ६ इत इतो भर्तृदारिका । ७ वयस्य समासन्नो दिवसारंभ. अद्य खलु वारुणीदिशमव-लंब्यमानः चकोरवारणानां दिनकरी कृष्णवर्णां ज्योत्स्ना मुंचन् पश्चिमजलनिधिवेला-विहाररसिक इवालंक्रते शीतांशुः ।

लंबंतो चओरवारणाणं दिअरो कसणवण्णां जोहणं मुंचंतो पच्छिमजलणिहि-
बेलाविहाररसिओ विअ वोलंविज्जइ सीअंसु ।

रामः—कथं विभातप्राया विभावरी । संप्रति हि ।

विभातविश्लेषितपद्मबंधान्
मंदं विभिंदन्नरविंदकोशान् ।
आवाति वायुर्दिवसोत्सुकाना—
माश्वासनः कोककुटुंबिनीनाम् ॥ १६ ॥

विदूषकः—[1]वअस्स जाव वअंपि गच्छेमो ।

रामः—*यथा भवानाह ( परिक्रामन् )*

भवत भवत सर्वे निर्वृताश्चक्रवाका
दिवसकरकराग्रैस्ता निरस्ता तमिस्राः ।
भजत सह वधूभिः स्वैरसंभोगयोग्यान्
विकचदलकरंडानाशु तान् पद्मखंडान् ॥ १७ ॥

विदूषकः—[2]इदो पिअवअस्सो ।

( निष्क्रांतौ )

इति श्रीगोविंदस्वामिनः सूनुना हस्तिमल्लेन विरचिते
मैथिलीकल्याणनाटके चतुर्थोऽङ्कः ॥ ४ ॥

---

१ वयस्य यावद्वयमपि गच्छामः । २ इतः प्रियवयस्यः ।

# पंचमोऽङ्कः ॥ ५ ॥



( ततः प्रविशति कंचुकी )

कंचुकी—( परिक्रम्य आत्मानं निर्वर्ण्य च ) अहो वार्धकं नाम गुणाय संपद्यते । अहं हि—

वैषम्यदोषमवनौ परिहृत्य यत्ना-
द्गच्छन् क्रमादविषमे पथि सावधानः ।
दंडेन चोचितनिदेशनिवेशितेन
बिभ्रत् स्थितिं धरणिपालधुरं दधामि ॥ १ ॥

अथवा का वा तत्र गुणगृह्यता श्लाघ्या । तथाहि ।

रचयति जरा वाचं कंठं महादिव गद्गदां
स्खलति चरणद्वंद्वं मूर्ध्नाप्यहस्खलतः खलु ।
गलयति च वयस्तत्रांगं मे विधून्वदिव स्वयं
चलति पलितं पाप्मा प्रागर्जितः फलितच्छलात् ॥२॥

( सस्मितं ) इयं पुनरपहृता स्म दौर्जिल्यसर्वस्वा जरत्कंचुकमात्रधारणं च न क्षमते तरुणजनसंमोहिनी जरापण्यांगना । ( निर्वर्ण्य )

आगुल्फलंबाकुलवारबाणो
विश्लिष्टनिर्मोक इवास्मि भोगी ।
आश्लिष्टसर्वांग इवान्यदहं हि
सुविग्रहिण्या च जरागृहिण्या ॥ ३ ॥

( विचिंत्य ) आस्तां तावदियमसंस्तुतकथा आज्ञापितोस्मि महाराजजनकेन । यथा—आर्य गुरुदत्त यत्नक्रमश्रमपरिपालितं दिव्यधनुर्यो हि नाम तदधिज्यं कुर्यादविकलाततस्तेनैव वीर्यशुल्केन तस्मै वत्सा सीता प्रदातव्या । आहूताश्च तदर्थमेव सर्वेपि राजपुत्राः । तद्दिदानीं मद्वचनादमात्य-

संघ ब्रूहि । यथा अद्य खलु वत्सायाः सीतायाः परिणयनसमयः अद्यैव च राज्ञां धनुर्गुणारोपणपरीक्षणं । तत्सज्जीक्रियतां सभाभूमिः प्रवर्त्यतां च राज्ञां सभाभूमिसमासादनाय समुद्घोषणा, नियोज्यतां च धनुरानयनाय किंकराः । इत्थं चादिश्यता भवतापि पुनस्तत्रैव निर्वर्त्ये वस्तुनि व्यापृतात्मना भवितव्यमिति । अनुष्ठितश्च मया स्वामिनो निदेशः । अद्य हि यथार्हं संपादितमंगलकर्मतया गृहीतप्रतिकर्मेव कार्मुककर्मठकृत्यादेशभूमिः सभाभूमिः । तथाहि ।

एकांतवलद्दविर्णं प्रसाधिता सुलभयैव नोत्सेकम् ।
प्रतिपालयतीदानीं भूपालसभं सभाभूमिः ॥ ४ ॥

आनीतं च नभश्चरारक्षितैस्तद्दिव्यं धनुः । अद्य हि ।

मध्यप्रतिष्ठापितदीर्घचाप—
दंडा सभाभूमिरसौ बिभर्ति ।
अंतः समुज्जृंभितशेषभोग—
भीमस्य शोभां भुजगालयस्य ॥ ५ ॥

( नेपथ्ये )

भो भो प्रौढबलावलेपगुरुताकंडूलबाहर्गला
राजानो नवयौवनोग्रमदिरास्वादप्ररोहन्मदाः ।
वज्रावर्तमिदं धनुर्विघटयद्वत्त्वं वलिक्ष्माभृतो
युष्मानाह्वयते बलस्य निकषग्रावापरीक्षाक्षमः ॥ ६ ॥

कंचुकी—( कर्णं दत्वा ) इयमिदानीं राजपुत्रान् समाजयितुं नगराध्यक्षैरुद्घोषणा क्रियते । ( परितोऽवलोक्य ) ।

केचिद्रूढमनोरथा रथवरानध्यासिता भूभृतः
केचिद्दिक्करिहस्तकर्कशकराः सेवाकरीन्द्रस्थिताः ।
आरूढाश्चतुरंगजित्वरबलाः केचित्तुरंगोत्तमा—
नासीदंति तुरंतदुर्धममदा भूयस्सभाभूमिकाम् ॥ ७ ॥

अहं तु पुनरित्थ समर्थये ।

यस्य स्याद्वाहुरेकोप्यचलपरिवृढं मंदरं धर्तुमीशो
यस्य भ्रूक्षेपमात्रं क्षिपति जगदरिक्षत्रविन्नासदक्षम् ।
रामेणारोप्यमाणं समयमिव धनुस्तेन तत्स्याद्धिज्यं
मोचेत्स्यादधिज्यं ध्रुवमसहनसन्मानिभिर्वध्यमानै ॥८॥

( विलोक्य ) कौ पुनरिमौ ।

अन्योन्यमन्यूनमनोज्ञकांती
सह प्रयांताविव पुष्पदंतौ ।
इंद्रप्रतींद्राविव चावतीर्णौ
नेत्रे इव द्वे जगतां त्रयस्य ॥ ९ ॥

( निरूप्य ) ।

सोऽयं रामः समासन्नः सीतोद्वाहो रघूद्वहः ।
सोऽयं प्रतिनिधिः कांत्या लक्ष्मणः शुभलक्षणः ॥ १० ॥

यावदिदानीमितस्तावदहं महाराजाय निर्वर्तितं नियोग निवेदयामि ।

( परिक्रम्य निष्क्रांत )

शुद्धविष्कंभः



( ततः प्रविशति रामो लक्ष्मणश्च )

रामः—( सौत्सुक्यमात्मगतं ) अहो प्रिया हि नाम जनस्य संमोहिनी विद्या । मम हि ।

तद्बिंबाधरपानमीप्सितमुखं गात्रं तदाश्लेषणं
श्रोत्रे तद्वचनश्रुतौ व्यसनिते नेत्रे तदालोकने ।

घ्राणं तद्वदनारविंदसरसा मोदाय चोत्कंठते
पंचाक्षव्यसनाय पंच हि शराः पंचेषुणा स्वीकृताः ॥११॥

(प्रकाशं) वत्स लक्ष्मण ।

**लक्ष्मणः**—आज्ञापयत्वार्यः ।

**रामः**—

अनर्घ्यरूपामपि यस्ततां नये
धनुर्गुणारोपणमात्रशुल्कताम् ।
रजतृणेन क्षितिभृत्सु कौसुभं
विमुह्य विक्रेतुमना ध्रुवे ध्रुवम् ॥ १२ ॥

**लक्ष्मणः**—आर्य त्वां प्रत्येतदेवं प्रतिभाति । कुतः ।

अवलुप्तभुजंगलोकनाथ-
प्रियकांतास्तनपत्रभंगकांतेः ।
गरुडस्य गरोद्गराद्गरीयान्
वद वल्मीकभवः कियान् फणिः स्यात् ॥ १३ ॥

**रामः**—वत्स कीदृशं वा तद्धनुः ।

**लक्ष्मणः**—आर्य तत्खलु ।

नभश्चरभुजावलेपहठलुंठनातस्करं ।
बलस्य तुलने तुला तुलितभूभृतो भूभृतः ।
निशम्य तदिदं धनुस्स्तुवहवो निवृत्ता नृपा
विशंति मदकर्कशाः कतिपये समाभूमिकाम् ॥ १४ ॥

**रामः**—वत्स आदेशय मार्गं सभाभूमिकायाः ।

**लक्ष्मणः**—आर्य इत इतः ।

(उभौ परिक्रामतः)

**लक्ष्मणः**—(पुरो विलोक्य सहासं) अहो मौग्ध्यममीषां क्षत्रबंधूनाम् । कुतः ।

शैलेंद्रप्रतिपंथिबाहुशिखरे पंथानमस्मद्गिरा–
मुल्लंघ्येव बहिःस्थिते वलयतामार्ये च धुर्ये स्थिते ।
प्राताः कर्तुमधिज्यमद्य तदमी चापं वराका नृपाः
के वा वारणकुंभपीठदलने सिंहावृतेऽन्ये मृगाः ॥ १५ ॥

रामः—( पुरो विलोक्य ) कथं रथ्यांतरेषु निरुच्छ्वासो जनसंमर्दः ।

नेच्छा धौरितमध्यसादिनियतैर्वानायुकैर्लभ्यते
नीयंते विशिखांतरेषु करिणस्तिर्यङ्मुखा यन्तृभिः ।
सूतैस्संहृतरश्मिभिर्नियमिता निस्पंदनाः स्यंदनाः
शस्त्राण्यूर्ध्वमुखानि बिभ्रति भटा गंतुं कृतप्रेंखिताः ॥ १६ ॥

लक्ष्मणः—( पुरो निर्दिश्य ) अयमसौ सभाभूमिः ।

रामः—प्रविशावतः ।

लक्ष्मणः—यदाज्ञापयति आर्यः ।

( उभौ प्रविशतः )

लक्ष्मणः—( निर्वर्ण्य ) ।

उद्धूतां पटवासचूर्णसरणीं निम्नूतरत्नप्रभां
व्यत्यासाहितशक्रचापविभयामाकृष्टभृंगावलीम् ।
बिभ्रत्संप्रति लक्ष्यते स्वयमपि व्यक्तं सभामंडपः
संरंभव्यसनीव किंचन धनुर्ज्यारोपणाडंबरे ॥ १७ ॥

( हस्तेन निर्दिश्य ) आर्य परिकल्पितपूर्वोऽयं यथोचितमंचः यावदलं-क्रियताम् ।

रामः—यथाह वत्सः । ( उपविश्य ) वत्स उपविश्यताम् ।

लक्ष्मणः—यथाज्ञापयत्यार्यः । ( उपविशति )

रामः—( आत्मगतं ) ।

वपुर्दूरे वाचामिदमयमनर्घ्योदरमणि–
र्न मूल्यं त्रैलोक्यं क्व च मम मुधोत्कंठितमिति ।

मयि प्राक् प्रेयस्याः प्रणयघटनोपायकृपणे
कृपालुः प्राप्तोसौ सपदि धनुरारोपणपणः ॥ १८ ॥

अतश्च पाणौ कृतामिव मन्ये विदेहराजात्मजां । येन मे—

*शिथिला मिथिलाधिपात्मजायां*
प्रणयालाभजडा मनोरथाः प्राक् ।
अधुना तु विशृंखलं प्रवृत्ता—
श्च्युतयंत्रा घटिता रथा यथैव ॥ १९ ॥

आश्लेष्येव भुजद्वयेन दयितामुत्संगरंगं बला-
दारोप्यैव समर्प्य तत्करतलं दत्त्वैव शैत्यं दृशीः ।
आघ्रायैव कुचात्कुचं गतघृणं पीत्वैव बिंबाधरं
संपूर्यैव मनोरथांश्च शतशः सोच्छ्वासमस्मन्मनः ॥ २० ॥

(*प्रकाशं*) *वत्स लक्ष्मण किमत्र धनुर्गुणारोपणाय राजन्यकैः प्रतिपाल्यते।*

**लक्ष्मणः**—आर्य प्रेक्षकागमनं ।

**रामः**—कोसौ प्रेक्षकः ।

**लक्ष्मणः**—आर्य मिथिलेश्वरः ।

( *प्रविश्य पटाक्षेपेण* )

**विदूषकः**—जेदु पिअवअस्सो ।

**रामः**—कुतः खलु भवानियतीं वेलां चिरायितः ।

**विदूषकः**—किं अवरं संझोवासणप्पसंगेण ।

**रामः**—( सस्मितं ) जाने तादृशी हि भवतो नियामानुष्ठानचुंचुता ।

**विदूषकः**—जई जाणासि कुदो मं पुच्छासि ।

**रामः**—तिष्ठत्वेतत् । कुतो भवान् कुपितभुजंगोच्छ्वासघर्घरानाया-मिनस्तरंगिलोपवीतसूत्रान्निर्मुंचति श्रमशंसिनो निश्वासान् ।

---

१ जयतु प्रियवयस्यः । २किमपरं संध्योपासनप्रसंगेन । ३ यदि जानासि कुतः पच्छसि ।

विदूषक.—वेअस्स अहं खु एत्थ एव्व आआच्छंत महाराअजणअ दंसिअ असवादेण पविसिदुं तरिअ आहिडिओ ।

राम.—किमागच्छति विदेहेश्वरः ।

विदूषकः—ओम ।

लक्ष्मणः—( पुरो निर्दिश्य ) आर्य एष विदेहेश्वरः । योसौ—

उत्सारणासंभ्रमसत्त्वरेण
परिष्कृतः कञ्चुकिनां गणेन ।
आयाति गंधद्विपखेलगामी
समां हरिः शैलगुहां यथैव ॥ २१ ॥

राम·—( दृष्ट्वा आत्मगतं ) ।

हिमवानिव गंगाया लक्ष्म्या इव पयोनिधि· ।
स एष खलु सीताया जनको जनको नृप. ॥ २२ ॥

( तत प्रविशति जनक कञ्चुकी च )

कंचुकी—इत इतो महाराज ।

( उभौ परिक्रामत )

दूरादम्बरचारिभिः परिहृत यद्वीर्यशौण्डैर्धनु—
र्मर्त्यः कर्तुमधिज्यमद्य तदिदं को वा क्षमः स्यादिति ।
दिष्ट्या ज्यामधिरोपयेद्धनुषि यस्तस्मै महाबाहवे
दातव्या दुहितेत्यनेन च मन· क्लिष्टं च हृष्टं च नः ॥ २३ ॥

इय च मे समर्थना ।

धन्विप्रवीरानवधीर्य सर्वा—
नानप्रभाव च न जातु याति ।
केदं धनुस्तत्क च वज्रकाडं
शार्ङ्गं पिनाक च धनुष्कथा नु ॥ २४ ॥

---

१ वयस्याह खलु अत्रैवागच्छत महाराजजनक दृष्ट्वा असवादेन प्रवेशितु त्वरित-माहिंडित. । २ ओम् ।

कंचुकी—एतद्भद्रासनं । यावदलंकरोतु महाराजः ।

जनकः—( उपविश्य ) आर्य गुरुदत्त का वात्र संप्रति निर्वत्यश्चैव चापाधिज्यकरणाय प्रतिपालयति क्ष्माभुजो भुजसारद्रविणानिदं धनुः ।

कंचुकी—अधुना प्रतिपालयंत्यमी नृपसिंहा अपि भर्तृदारिकां ।

जनकः—आर्य गुरुदत्त तेन हि समानीयतामिहैव वत्सा सीता ।

कंचुकी—यथाज्ञापयति महाराजः । ( निष्क्रांतः ) ।

विदूषकः—( जनांतिकं ) वंअस्स इदो एव्व आअमिस्सिदि तत्तहोदी दाणिं सफलो अम्हाणं पअंतो जेण लोउत्तरपरक्कम्मविहवस्स अत्तहोदो ण किंपि तेलोक्के दुक्करं णाम किं पुण एत्तिअमेत्तं चावाधिज्जीकरणं कम्मं ।

( ततः प्रविशति सीता विनीता कंचुकी च)

कंचुकी—इत इतो भर्तृदारिका ।

सीता—( परिक्रामंती जनांतिकं ) हंजें विणीदे किं सच्चं अज्जउत्तो तहिं आअच्छइ ।

विनीता—( जनांतिकं ) सो दाव अण्णूणसहअतारुण्णविक्कमो अग-दो पविसई अण्णो पुण आअच्छेदि वा ण वा ।

सीता—हंजि अवि णाम अह्माणं मणोरहो सफलो भवे ।

विनीता—भट्टिदारिए किं तुवं साहारणमणुस्समज्झीए लहूकरेसि भट्टिणंपि रामं । सो खु सव्वहा माणुसरूवमेत्तधारि देवोत्ति समत्थेहि ता ण खु तस्स एअंपि चावजीवारोपणं विक्कमसिलाहाए पज्जत्ति ।

१ वयस्य इत एवागमिष्यति तत्रभवतीदानीं खलु सफलोस्माकं प्रयत्नः येन लोकोत्तरपराक्रमविभवस्यात्रभवतः न किमपि त्रैलोक्ये दुष्करं नाम किं पुनः एताव-न्मात्रं चापाधिज्यकरणं कर्म । २ हंजे विनीते किं सत्यमार्यपुत्रस्तत्रागच्छति । ३ स तावदन्यूनसहजतारुण्यविक्रमोऽग्रतः प्रविशति अन्यः पुनरागच्छति वा न वा ? । ४ हंजे अपि नामास्माकं मनोरथः सफलो भवेत् । ५ भर्तृदारिके किं त्वं साधा-रणमनुष्यमध्ये लघूकरोषि भर्तारमपि रामं । न खलु सर्वथा मनुष्यरूपमात्रधारी देव इति समर्थयस्व तस्मान्न खलु तस्यैतदपि चापजीवारोपणं विक्रमश्लाघायाः पर्याप्तिः ।

विदूषकः— ( दृष्ट्वा जनांतिकं ) वअंस्स एसा खु अत्तहोदी[1] ।
रामः—( दृष्ट्वा आत्मगतं ) ।

अस्या मदनधनुर्ज्या गुंजितमिव हंसखेलगमनायाः ।
मंजरिसिंजितमिदं गाढोत्कंठं मनः कुरुते ॥ २५ ॥

इत्थं मनोत्प्रेक्ष्य ।

अनन्यतुल्योज्ज्वलरूपयानया
कृता तुलाकोटिरसौत्कृतेः पदम् ।
इति स्फुटं घोषयितुं नु बुध्यते
निजे तुलाकोटिरसौ पदद्वये ॥ २६ ॥

विनीता—( रामं दृष्ट्वा जनान्तिकं ) भट्टिदारिए एसो खु भट्टा रामो[2] ।
सीता—( सहर्ष आत्मनि ) कहं आअदो एव्व[3] ।
कुंचुकी—एष महाराजः यावदुपसर्पतु भर्तृदारिका ।
सीता—( उपसर्पति )
जनकः—वत्से इहोपविश्यतां ।

( *सीता विनीता च यथोचितमुपविशतः* )

जनकः—आर्य गुरुदत्त चापाधिज्यकरणाय भूमिपालमुख्यानावेदय ।
कंचुकी—यथाज्ञापयति महाराजः ( हस्तमुत्क्षिप्य )

समायाता यूयं क्षितिपतिसुता विक्रमधना
धनुर्जाग्रचेच्छेन्नृपवरभुजैर्जित्यविधये ।
स्थितः प्रेक्षापेक्षः परिषदि महाराजजनको
वलक्रय्या प्राप्ता स्वयमपि विदेहेश्वरसुता ॥ २७ ॥

*तदिदानीं ।*

१ वयस्य एषा खलु अत्रभवती । २ भर्तृदारिके एष खलु भर्ता रामः ।
३ कथमागत एव ।

यस्य स्मृत्वापि सद्यश्चकितविगलितैः खेचराग्रेसराणां
श्रांतं कांताकपोले लिखितुमपि करैस्तत्रपं पत्रभंगान् ।
तस्मिन्नारोप्य जीवां धनुषि नृपतयश्चापविद्याभियुक्ता
लोकांतं लोककांतं निजमपि च यशः स्वैरमारोपयंतु ॥ २८ ॥

लक्ष्मणः—( पुरो विलोक्य ) अये कस्यचिद्बाहुशालिता नृपशार्दूलस्य । तथाहि ।

आरोप्याग्रप्रकोष्ठात्कटकमशिथिलं गाढमावद्धकक्षो
मध्ये चारोप्य जानु क्षितिमपि चरणेनापरेणाधितिष्ठन् ।
आरोप्य ज्यां निवृत्तः कथमपि विकटं चापदंडस्य कोटिर्नासौ वाच्यः प्रकृत्या क इव हि विगुणः स्याद्गुणाधाननम्रः॥२९॥

जनकः—( निर्वर्ण्य ) अहो नु खल्वस्य धनुष्कस्थेमा । तथाहि ।

गुणव्ययाश्रया वृत्तिर्गौणीति विगणय्यताम् ।
स्थेयसा धनुषा वृत्तिरन्यत्रूतैव वर्तते ॥ ३० ॥

लक्ष्मणः—आर्य पश्य पश्य ।

कश्चित्प्राप्य निरुद्यमो धनुरिदं दृष्ट्वा परो निस्पृहः
स्पृष्ट्वान्योन्यवृत्पतदानि कतिचिद्विन्यस्य कोपि स्थितः ।
उद्धृत्याप्युमुचत्सहैव गलता मानेन मानीतरः
प्रोत्थायैव परः स्थितो नृपपशुर्नैवोत्थितः कश्चन ॥ ३१ ॥

विदूषकः—वअस्स किं अवरं सव्वहा तुइ सज्जे चेअ एअं सज्जं होइ धणुं[1] ।

लक्ष्मणः—आर्य किमपरं विलंब्यते । यावदिदानीं ।

आरोप्य मौर्वीमवरोप्य रूढान्
मानगृहान्मानयतां नृपाणाम् ।

[1] वयस्य किमपरं सर्वथा त्वयि सज्जे एव एतत् सज्जं भवति धनुः ।

समं शिरोभिर्नमयत्वमीषां
कोदण्डकाण्डं पुरुषप्रकांडः ॥ ३२ ॥

रामः—यदाह वत्सः ( उत्थायोपसृत्य च धनुरुद्यम्य आत्मगतं ) ।

नमयति यदनंगः कौसुमीं चापयष्टिं
नमयति च यदेषा भ्रूधनुः पक्ष्मलाक्षी
तदुभयमपि दिष्ट्या दृष्टसाफल्यमेत-
न्नमयति मयि कामं चापमारोपितज्यम् ॥ ३३ ॥

( ज्यामारोप्य धनुर्नमयति ) ।

सर्वे—आश्चर्यं आश्चर्यम् ।

सीता—( सहर्षमात्मगतं ) संपुण्णा मे मणोरहा ।

विनीता—( जनांतिकं ) भट्टिदारिए दिट्ठिआ वड्ढेम ।

लक्ष्मणः—आर्य स्थीयतां मुहूर्तमनेनैव विभ्रमेण ।

निर्निमेषमिमां शोभां विलोचनविलोभनीम् ।
पश्यंतस्स्वैरमार्यस्य प्रेक्षकास्संतु निर्वृताः ॥ ३४ ॥

जनकः—

अधुना धनुर्भुजवतां भुजसारग्लानिशंसिमंडलितम् ।
वहति परिवेशकांतिं कांत्या शीतांशुरिव रामः ॥ ३५ ॥

रामः—( ज्यामाकर्ष धनुर्भनक्ति आकाशे पुष्पवृष्टिः क्रियते )

विदूषकः—( ससंभ्रमं ) किं एअं ( दृष्ट्वा ) कहं भग्गं धणु वअस्सेण ।

सर्वे—आश्चर्यम् ।

सीता—( ससंभ्रमं जनांतिकं ) हेला किं एअं ।

विनीता—भट्टदारिए भग्गं खु धणु भट्टिणा ।

---

१ संपूर्णो मे मनोरथाः । २ भर्तृदारिके दिष्ट्या वर्धामहे । ३ किमेतत् । ४ कथं भग्नं धनुर्वयस्येन । ५ हला किमेतत् । ६ भर्तृदारिके भग्नं खलु धनुर्भर्त्रा ।

सीता—अम्हो लोउत्तरकोसलो उत्तरकोसलेसरो ।

लक्ष्मणः—अहो श्रुतिपथोन्मादी निर्घातनिर्घोषगंभीरो विह्वलितहरिद्विरदो धनुर्भंगघोषः ।

दिव्यानां भयपूर्णमानशिरसां नो साधुकारध्वनिः
निर्यात्याननतो हनुष्ककरुणं संताडितानामिव ।
नाद्यापि प्रभवंति मूर्छितधियः पुष्पाणि ते वर्षितुं
तेषां त्रासविधूनितेषु गलितं हस्तेषु पुष्पैः स्वयम् ॥ ३६ ॥

जनकः—

दिङ्नागा दृढमीलितेक्षणपुटाः शुष्यन्मदांभःप्लवा
विस्मृत्येव च कर्णतालनमपि त्रासान्मुहूर्तं स्थिताः ।
प्रत्याश्वस्य च कर्णपल्लवयुगं संताडयंतः पुनः
मन्ये श्रोतुमनीश्वराः कटुमिमं प्रोत्सारयंति ध्वनिम् ॥ ३७ ॥

आर्य गुरुदत्त प्रवर्त्यतां सीतापरिणयनोत्सव इति मद्वचनाभियुज्यतां प्रकृतिः ।

कंचुकी—यथाज्ञापयति महाराजः । ( प्रणम्य निष्क्रांतः ) ।

( नेपथ्ये कलकलानंतरं )

सज्जास्ते समराय युद्धरसिकाः सन्नद्धसैन्या नृपा
येषां चापवदेव संगरकथा पार्ष्णिगृहा पादुकैः ।
किं भूयोपि विकत्थितैर्लपुतररैक्ष्वाकु शक्रोपि चे-
त्सीतायाः प्रवरो वरो भवरणं कृत्वा च जित्वा च नः ॥ ३८ ॥

सीता—( श्रुत्वा सभयमपवार्य ) हलां किं एअं ।

विनीता—( जनांतिकं ) मुद्धे मा हआहि जारिसो तेसं धणुगुणारोवणसंरंभो तारिसं चेअ आहो पुरिसिअमेत्तं एअंपि अ समरसोढिरं जाण ।

---

१ अहो लोकोत्तरकोशलः कोशलेश्वरः । २ हला किमेतत् । ३ मुग्धे मा बिभेहि यादृशस्तेषां धनुरारोपणसंरंभः तादृशमेवाहो पुरुषित्वमात्रं एतदपि च समरशौटिर्यं जानीहि ।

रामः—( श्रुत्वा सकोपं )।

श्रुतं श्रवणयोः प्रियं किमपरं मया स्थीयते
प्रिया वसतु वक्षसि स्वयमसौ सीता मम।
मदस्रुहलकर्पणोपजनितां च सीताममी
नृपास्त्वरितमीप्सितां युधि वहंतु वक्षःस्थलैः॥ ३९॥

इति संरंभते।

लक्ष्मणः—अलमलं संरंभेण

नमयति धनुस्तच्चैवार्ये भयक्षुभितं जग–
न्नमयसि यदि भ्रूचापं त्वं रुषा विवशीकृतः।
न कुलगिरयो न त्रैलोक्यं न चाम्बुधयः क्षणा–
त्सकुलविधुतः कोपस्तस्मात्प्रसीद विधूयताम्॥ ४०॥

किं चान्यत्। न चैते क्षुद्राः क्षत्रिया शस्त्रो भवतः कोपस्य पर्याप्ताः। पश्य।

कक्षात्कक्षं विविक्षुं शशशिशुमशनैरप्लुतं विप्लुताक्षं
किं दृष्ट्वा हंत हंतुं कलुषयति क्रुधा मानसं राजसिंहः।
यस्य क्रोधांधगंधद्विरदरदनद्वंद्वकंदांतराल–
स्थाली निर्मुक्तमुक्ताफलशकलशिलादंतुरा दंतपंक्तिः॥ ४१॥

जनकः–( सस्मितं )।

यैः स्प्रष्टुं च न च क्षमे नृपसखैश्चापं निवृत्तं तदा
जीवारोपणचापला नृपतिभिर्वैलक्ष्यलक्ष्मीकृतैः।
ते यूयं क इवाधुना युधि परं रामेण बद्धः क्रुधा
युष्मास्वेव मिषस्तु येन च धनुर्भुग्नं च भग्नं च तत्॥ ४२॥

किंच। उपालंभभूमिश्च भवतामयमारभः। कुतः।

पर्जन्यं प्रति गर्जतां मदनदस्रोतोमुचां दंतिनां
संघर्षेण मुधैव यत्किल मुहुः प्रागर्जितं गर्जितम्।

तर्किं कर्तुमलं बलाद्गजरिपौ दंतार्पितांघ्रिद्वये
मस्तिष्काहरणाय मस्तकतटं स्वच्छंदमुच्छिद्दति ॥ ४३ ॥

( आकाशे )

श्लाघाभूमेर्बलस्य क्षपितरिपुबलं पश्यतास्यानुभावं
स्थैर्यारूढा हि सप्तक्षितिधरपतयश्चाष्टमश्चैष रामः ।
पश्यंति ज्ञाननेत्रा यदनघमृषयश्चात्तचारित्रनिष्ठाः
कैवल्यं प्राप्तुकामा हितमिह तदिहामुत्र च ब्रह्मदृष्टम्॥४४॥

लक्ष्मणो जनकश्च—( श्रुत्वा ) कथमसौ चरमदेहधारी पुरुषोत्तमः ।

( सर्वे प्रणमंति )

लक्ष्मणः—आर्य पश्य पश्य ।

श्रुत्वा जगद्विस्मयनीयकीर्तेः
कीर्तिं सुरेन्द्रैस्तव कीर्त्यमानाम् ।
भक्त्या भवंतं परितः स्तुवंतो
नमंति बद्धांजलयो नरेंद्राः ॥ ४५ ॥

जनकः—भृंगारस्तावत् ।

विनीता—( उत्थाय नाम्येनादाय ) ईदो सण्णिहिदो रअणभिंगारओ । ( उपनयति )

जनकः—( उत्थाय नाम्येन गृहीत्वा राममुपसृत्य ] भद्रे विनीते भद्रां सीतामिहैवानय ।

विनीता—जं महाराओ आणवेदि । ( तथाकरोति )

जनकः—

उर्वीं पालयितुं गुर्वीं सरत्नाकरमेखलाम् ।
राम भ्रभवते दत्ता सीतासौ भवतं मया ॥ ४६ ॥

१ इतः सन्निहितो रत्नभृंगारः । २ यन्महाराज आज्ञापयति ।

रामस्य हस्ते धारामावर्जयति ।

विदूषकः—[ सहर्षं ] सोहणं सोहणं ।

रामः—( आत्मगतं ) संपूर्णा मे मनोरथाः ।

सीता—( आत्मगतं ) किंअत्थं मे जम्म ।

( नेपथ्ये वैतालिकौ )

वैतालिकौ—अहो नु खलु भो सीतापरिणयनोत्सवस्य वरा लक्ष्मीः ।

प्रथमः—

जगदतितरां कीर्णैः पिष्टातकैरनुरंजितं
मरुदपि कृतो यंत्रोन्मुक्तैर्जलैः सुखशीतलः ।
समभिलषितानर्थानेते समाददतेऽर्थिनो
न कृपणकथा क्वापि प्रातावकाशमिहोत्सवे ॥ ४७ ॥

द्वितीयः—

जगति कृतिनी सीता श्लाघ्या भृशं कुलयोषिता
रघुपतिरमुष्यस्या लोकोत्तरः सदृशः पतिः ।
किमकृत तपस्तस्या माता वधूवरमीक्षितुं
तदिति च मुदा पौरस्त्रीणां भवंति मिथः कथाः ॥ ४८ ॥

जनकः—महाभाग किं ते भूयः प्रियमुपहरामि ।

रामः—

त्वया बांधवमस्माभिर्लब्धमद्य सुदुर्लभम् ।
भूपेंद्र प्रियमस्माकमाशास्यं किमतः परम् ॥ ४९ ॥

तथाप्येतद्भवतु ।

श्रोतुं मां समुपाश्रितं सुकृतिनः स्वीकुर्वतां दर्शनं
ध्यानं व्याप्रियतां सतामविहितं ज्ञेयेषु सर्वेष्वपि ।

१ शोभनं शोभनं । २ कृतार्थं मे जन्म ।

साधूनां समतावलं विभवतादवृत्तं निवृत्ताक्षर्य
सूक्तिस्सज्जतशंसनैकदारणा स्थेयात्कथीनां चिरम् ॥ ५० ॥

जनकः—एवमस्तु ।

( निष्क्रांता. सर्वे ) ।

इति श्री गोविंदस्वामिनः सूनुना हस्तिमल्लेन विरचिते
मैथिलीकल्याणनामनाटके पंचमोऽङ्कः ॥ ५ ॥

---

## ग्रंथकर्तुः प्रशस्तिः ।



कृतिरियमभियुक्तैः स्वैरमास्वादनीया
रसमपरमपि स्याचर्तनिष्यादधाना ।
विजितधिषणबुद्धेर्हस्तिमल्लस्य दिक्षु
मथितविमलकीर्तेः सूक्तिरत्नाकरस्य ॥ १ ॥

एतन्नाटकरत्नमुत्तमगुणं विभ्राजते मैथिली-
कल्याणं भुशमद्वितीयमपि सत्तेषु द्वितीयं मतम् ।
सर्वत्र प्रथिताः प्रबंधमणयः श्रीसूक्तिरत्नाकर-
प्रख्यातापरनामधेयमहतः श्रीहस्तिमल्लस्य ये ॥ २ ॥

इति प्रशस्तिः ।



